था। कक्षा मे पढते समय एक दिन सयोगात् इनके अध्यापक की दृष्टि उस कविता पर पड गई और आर्यसमाजी अध्यापक ने इनकी खूब मरम्मत की। किन्तु इस घटना के बाद अध्यापक के मन मे भी इनकी प्रतिभा एव कवित्व शक्ति की धाक बैठ गई। अध्यापक भी व्रजभाषा मे समस्या-पूर्त्तियाँ किया करते थे। उक्त अध्यापक ने अपने पुस्तकालय मे रखी पुस्तकें इन्हे पढने की छूट दे दी। त्रिपाठीजी का छात्र-जीवन उज्ज्वल रहा; अपनी कक्षा के ही नही, अपने विद्यालय के भी ये सर्वश्रेष्ठ छात्र थे और इनकी हिन्दी लिपि इतनी सुन्दर बनती थी कि नागरी प्रचारिणी सभा काशी की ओर से इन्हें सर्वोत्तम लिपि के लिए पुरस्कृत किया गया था।

छात्र जीवन की समाप्ति के अनन्तर भी त्रिपाठीजी का पठन-पाठन चलता ही रहा। कुछ दिनो तक नौकरी की तलाश मे ये कलकत्ते भी रहे और फिर भारत के कोने कोने की यात्रा की। यात्रा मे सग्रहणी रोग से पीडित हुये; और उपचार के लिए राजस्थान विशेषकर मारवाड मे यह वर्षो रहे। वहाँ एक सेठ की लाइब्रेरी मे त्रिपाठीजी को पढने लिखने का यथेष्ट अवसर मिला। कुछ करना धरना तो था नही, दिन रात पढने-लिखने मे ही यह लगे रहे और सैकडो पुस्तकें पढ डाली। कहना तो यह चाहिए कि उसी के बाद आपकी कवित्व शक्ति, प्रतिभा, अध्ययन और अनुभूतियो को अभिव्यक्ति की उचित दिशा मिली।

सर्वप्रथम आपने महाभारत की कथाओ के आधार पर हिन्दी-महाभारत की रचना की, जो प्रकाशित होने पर बहुत लोकप्रिय हुई। इसके बाद १९१५ मे त्रिपाठीजी प्रयाग आ गए और प्रयाग के साहित्यिक वातावरण के अभिन्न अंग बन गए। प्रयाग में ही उनकी कवित्व प्रतिभा का सम्यक् प्रस्फुटन हुआ। इनकी अधिकाश रचनाएँ प्रयाग मे ही रची गई और यही हिन्दी-मन्दिर नामक प्रकाशन-सस्था तथा प्रेस भी आपने खोला। हिन्दी मन्दिर का हिन्दी की पुरानी तथा प्रतिष्ठित प्रकाशन सस्थाओ मे उन दिनो अच्छा मान था।

प्रयाग मे ही त्रिपाठीजी की मैत्री हिन्दी के अनन्य सेवक राजर्षि श्री पुरुषोत्तमदास टण्डनजी मे हुई और उसके बाद आप हिन्दी-साहित्य-सम्मेलन मे भी प्रचार मन्त्री के पद पर चुने गए। उसी अवधि मे आपका सम्पर्क विश्ववन्द्य महात्मा गान्धी से हुआ। गान्धीजी का आपके साथ बडा प्रेम भाव रहा। आपकी कवित्व प्रतिभा एव वक्तृत्वकला के गान्धीजी बडे प्रशंसक थे। पथिक को उन्होंने स्वय पढ़ा था और प्रशसा का पत्र लिखा था। महामना मालवीयजी के साथ भी त्रिपाठीजी का घनिष्ठ सम्बन्ध रहा। "मालवीय जी के साथ तीस दिन" आपकी सुप्रसिद्ध गद्य पुस्तक है, जिसमे मालवीयजी के सस्मरणो का रोचक वर्णन है।

त्रिपाठीजी ने हिन्दी साहित्य की बहुमुखी सेवाएँ की हैं। आपकी कविताओ का ही नही, गद्य, कहानियो, नाटकों तथा सस्मरणों का भी हिन्दी-साहित्य मे आदरणीय स्थान है। आपकी कविता-कौमुदी नामक पुस्तक हिन्दी मे अपने ढग की अनूठी है। उसके पाँच भाग प्रकाशित हुए हैं। इन्ही मे से एक भाग मे लोकगीतो का सग्रह है जो हिन्दी-भाषी प्रदेशो के सभी अचलों का प्रतिनिधित्व करता है। लोकगीतो की ओर त्रिपाठीजी के पहले किसी का ध्यान नही था। इनके सग्रह करने मे आपने इतनी यात्राएँ की और इतना कष्ट उठाया कि आपका स्वास्थ्य बहुत गिर गया और ऐसा भी समय आया जब डाक्टरों ने आपकी जीवन-रक्षा मे निराशा तक प्रकट की। किन्तु त्रिपाठीजी की कर्मठता एव जीवनी शक्ति इतनी प्रबल थी कि उन्होंने साहित्य सेवा का अपना प्रिय व्यसन नही छोड़ा और शनैः शनैः अपने गिरते हुए स्वास्थ्य को भी सभाल लिया।

त्रिपाठीजी ने सम्पादन एव समालोचना के क्षेत्र मे भी यश प्राप्त किया है। आपके रामचरित मानस की टीका और उसकी विस्तृत भूमिका का हिन्दी जगत मे अच्छा मान है। प्रकृत्या कवि होने के कारण आपकी रचना एवं वार्ता दोनो मे पाठको एव श्रोताओ को विमुग्ध कर देने की अद्‌भुत शक्ति है। जब कभी किसी सभा या गोष्ठी मे आप बोलते हैं तो उतने समय के लिए निस्तब्धता छा जाती है। प्रसगों के अनुरूप आपकी भाषा और भावाभि-

व्यक्ति की शैली मे जैसे चमत्कार हो जाता है। अपने वर्णनो मे कारुणिक सन्दर्भो को आप इतना सजीव बना देते है कि हृदय की प्रसुप्त वेदना फूट पड़ती है। एक बार हिन्दू विश्वविद्यालय काशी मे अपने व्याख्यान के बीच आपने एक लोककथा का उद्धरण दिया। प्रसग अति कारुणिक था। फिर तो थोडी ही देर मे अपने सहस्रो छात्रो-छात्राओ एव अध्यापको के बीच मालवीयजी महाराज की अश्रुधारा फूट पडी। इसी प्रकार आपके हास्य एवं शृगार के प्रसंग भी अत्यन्त मुखर होते हैं।

'पथिक' का त्रिपाठीजी की कृतियो मे *अग्रणी स्थान है* और इसकी प्रशंसा करते हुए देश तथा विदेश के विद्वानो ने जो उद्‌गार प्रकट किए हैं, उनका सग्रह स्वयमेव एक पुस्तिका के रूप मे प्रस्तुत किया जा सकता है। देश एव विदेश की अनेक भाषाओ मे इसका अनुवाद भी हो चुका है।

पण्डित मधुकर शास्त्री ने त्रिपाठीजी की इस अनवद्य रचना का सस्कृत मे सुन्दर अनुवाद कर एक बडा कार्य किया है। अनुवाद का कार्य बडा कठिन है। और फिर सस्कृत जैसी अप्रचलित भाषा मे और वह भी पद्य मे अनुवाद करना तो एक दुष्कर कार्य है। किन्तु हमे प्रसन्नता है कि मधुकर शास्त्री जी को अपने प्रयत्नो मे *यथेष्ट सफलता मिली है* और इसके लिए *वे बधाई* के पात्र हैं। हमे विश्वास है कि उनकी इस कृति का उचित समादर होगा और इसके द्वारा सस्कृत काव्य-रसिको को भी त्रिपाठीजी की इस रचना का रसास्वादन करने का अवसर मिलेगा।

जन्माष्टमी, २०१६,
प्रकाश-निकेतन,
कृष्णनगर, इलाहाबाद।

रामप्रताप त्रिपाठी
स० मत्री
हिन्दी-साहित्य-सम्मेलन
प्रयाग।

ॐ श्रीमते पवननन्दनाय नमः ।

# ★ किञ्चिदात्मनिवेदनम् ★

कविकुलकलानिधेर्विद्वद्वरेण्यस्य श्रीमत श्रीरामनरेशत्रिपाठिनः कलितकल्पनासमुल्लसितस्य, राष्ट्रियभावनाविभूषितस्य, सुधाधारानिस्यन्दितस्येव ललित-ललितस्य 'पथिक'—नामधेयस्य राष्ट्रवाणीकाव्यस्य गीर्वाणवाण्या रूपान्तरं निगुम्फयाऽत्रभवता पाठकमहानुभावाना पुरत समुपस्थितस्य मे मानसमद्य परमेव प्रमोदातिशयमाविष्करोतितमाम् । राष्ट्रभाषासाहित्याऽन्तरिक्षे कियद्वा गौरव-ज्योति प्रस्फुरति कविवरतरणेरस्य सुमञ्जुरचनारश्मिपुञ्जस्येति नेद तिरोहित विपश्चिदपश्चिमाना सहृदयहृदयानाम् । तदीयचतुरस्रप्रतिभाप्रभाप्रभावात् सर्वेऽपि सभ्यमहाभागाः सुपरिचिता एवेत्यतो हेतो नं किमप्यधिकमभिधानीयमवशिष्यतेऽत्र विषये ।

मूलग्रन्थतो रूपान्तरकरणे क्वाऽपि कारिचदपि त्रुटयो भवेयुरेवेति सभावयितुमेतच्छक्यते, पर तस्याऽऽशय यथावदुपपादयितु स्वमत्यनुसार सर्वदा सुभृशं मया प्रयतितम् । मन्ये, धिषणैकघना विबुधवर्य्याः, रससिद्धाः कवीश्वरारच नीरक्षीरविवेकेन तामिमा कृतिमनुगृह्य; मानवस्वभावसुलभास्त्रुटीश्च मह्यं ससूच्य मामुपकरिष्यन्ति, येनाऽऽगामिनि संस्करणे ता. परिष्क्रियेरन्निति ।

मूलकाव्ये प्रत्येकसर्गस्य प्रथमवर्णसयोजनेन श्रीरामनरेशत्रिपाठिमहाभागाना परमस्नेहपात्रस्य दिवङ्गतस्य 'नेवटिया'—पदाभिधेयस्य श्री—'राम कुमार'—महाशयस्य नामधेयं सम्पद्यते, इति तेषा भावान् यथावद् रक्षितुकामेन मयाऽपि तथैव विहितं, यथा प्रत्येकसर्गस्याऽऽद्याक्षरसंयोगेकृते 'रामकुमार' इति नाम निष्पद्यते ।

अतएव संस्कृतकाव्ये प्रत्येकसर्गस्य प्रथमो वर्णः स्थूलरूपेण विन्यस्तः ।

सर्वत. प्रथम प्रात.स्मरणीयचरणेभ्य. सम्प्रति कलकत्ताविश्वविद्यालये संस्कृतविभागाध्यक्षपदमलङ्कुर्वद्भ्यो, 'मीमांसान्यायकेसरि' 'विद्यासागर' प्रभृतिविविधोपाधिविभूषितेभ्यो भारतविश्रुतवैदुष्यवैभवेभ्योऽस्मद्गुरुवर्याऽऽचार्य्यप्रवर पं० श्रीपट्टाभिरामशास्त्रिपादेभ्य. परश्शतान् प्रणामपुष्पाञ्जलीनहमर्पये, येषा शुभाऽऽशीर्वाद एवाऽस्माकीन जीवनम् ।

श्रीमन्तो रामनरेशत्रिपाठिमहोदया अनुवादस्यैतस्य प्रकाशनार्थमनुज्ञा प्रदायैव न, अपि तु प्रकाशनसम्बन्धि समस्तं भारजातमपि स्वयमुररीकृत्य मामनुगृहीतवन्त, इति कैश्शब्दैस्तान् प्रति स्वीयं कार्तज्ञमाविष्कुर्याम् ? अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य महामन्त्रिण: डा० श्रीमण्डनमिश्रशास्त्रिण', जयपुरीयमहाराजसंस्कृतमहाविद्यालयेऽध्यापकपदमलङ्कुर्वन्त *आचार्यवर्य्या. प० श्रीदीनानाथत्रिवेदिनश्च* समुचितनिर्देशादिभिस्समये-समये कार्येऽस्मिन् मामुपकृतवन्त इति तौ प्रत्यस्मि नितरा साभार: ।

श्रद्धेय पं० श्री रामगोपाल 'पचोली' बी० ए०, साहित्यरत्न' महोदया', —येषा पावन प्रोत्साहनं बाल्यत एव मह्य कवित्वप्रेरणामदात्; बन्धुवर-श्री युगलकिशोरमिश्र एम्०ए० एल०एल० बी० महाशयाश्च,—येषां सहयोग एतल्लेखनादिसम्बन्धेऽद्वितीयो मयाऽनुभूत',—ते कथं वाऽभिनन्दनीया इति न मे बुद्धिपथमारोहति । 'पचोली'त्युपाह्वावस्मदभिन्नहृदयौ सुहृत्प्रवरौ श्रीकुञ्जविहारिश्रीविष्णुनारायणशर्म्माणौ—ययोर्मुहुर्मुहुः प्रेरणाया. साहाय्यस्य चाऽभावे प्रयासस्याऽस्य पूर्णता सन्दिग्धाऽऽसीत्,—तौ प्रति कृतज्ञताप्रकाशनं धन्यवादप्रदर्शनञ्च नूनमनयोर्नैसर्गिकस्नेहस्य तिरस्कार एव भविष्यतीति किमु नाम तद्विषये वक्तव्यम् ?

योधपुरस्थराजस्थानपुरातत्त्वान्वेषणमन्दिरे गवेषकपदाधिष्ठिता अस्मदीयवयस्यवर्य्या' आचार्यश्रीरामानन्दशास्त्रिण: सारस्वता' सर्वविधापेक्षितसहयोगप्रदानेनाऽस्मदीय समुत्साह समेधयन्तिस्मेति तान् प्रति नैकशो धन्यवादप्रकाशनं ननु मामकीनं कर्तव्यमेव ।

अखिलभारतीयहिन्दीसाहित्यसम्मेलनस्य यशस्विमन्त्रिपदमधिष्ठिता: सम्माननीया: प. श्रीरामप्रतापत्रिपाठिशास्त्रिवर्य्या': सत्यपि व्यस्ततामये

सङ्कुचितसमये सदयं भूमिकालेखनेन कृतिमिमां सनाथीकृतवन्त इति निभृतं तदर्थमाभारमहमावहामि ।

एतत्प्रकाशनसम्बन्धेऽस्मद्विद्यार्थिनोः श्रीमत्यनारायणश्रीजगदीशप्रसादशास्त्रिणोः साहाय्यप्रवृत्तिर्नूनं प्रशंसनीया, यौ हि नानापरिस्थितिवशादेकत्र स्थातुमशक्तस्य ममापेक्षितव्यवस्थासम्पादने यथा-शक्ति साहाय्यं व्यधाताम्।

अन्ते च, मदीय प्रयासोऽय देववाणीकवितावाङ्मयेऽभिनवमेकमध्यायं संयोजयिष्यतीति शुभाऽऽशयाऽनया मङ्गलमय परमात्मानं प्रणमन् विनिवेदनादस्माद् विरमामीति शिवम् ।

श्रीसरस्वतीसदन रामपुरा (डाबडी)<br>द्वारा–झोटवाड़ा,<br>जयपुर (रा० स्था०)<br>आषाढ़ी पूर्णिमा सम्वत् २०१६ वि०

मधुकर शास्त्री

॥ श्री. ॥

# मूलकथा

### प्रथमः सर्गः

अथैकदा प्रकृतेर्निखिलेभ्योऽपि विभवेभ्योऽधिक कमनीय, सरस समाह्लादकञ्च प्रभात रागरूप रथमधिरुह्य, भगवतो गभस्तिमालिनोऽरुणिममये वर्त्मनि चलित्वा कल्लोलमालाभिर्मुहुर्मुहुस्समाश्लिष्टे वारिनिधितीरे शनैश्शनैस्समागत्य सुखमिव दिग प्राची समालिलिङ्ग ।

उपस्समये सामुद्रिकसमीरसेवनसमीहया सागर-तीर समेत्य कश्चन 'पथिक' स्तदा भगवत्या प्रकृते परममनोज्ञा सुषमामवलोकयन्नासीत् ।
प्राकृतिकसौन्दर्य्यसमवलोकने स चैनावास्तन्मयोऽभूद्यत्तत्र तस्य निजतनुमनोज्ञानमप्यासीत् ।

तदानीमेव काचिल्लावण्यवती ललना तत्र समाययौ । आसीत् सेव तथा सौन्दर्य्यमयी, यथा हि, स्वर्गीयैका रश्मि', कवेस्स्वप्न', विश्वस्य वैलक्षण्य वा ।

नाऽसीत् सा प्रसन्ना । तस्या मानस-कुसुमे कश्चिद्विषाद-कीटोऽभ्दनुप्रविष्टः । सन्ध्यावेलासमायोगादुपवने हि यादृशमौदासीन्य व्याप्नोति, तादृश्येव वेदनायाश्छाया तस्या आननेऽवर्त्तत ।

प्रत्यभिज्ञातवती सा पथिकम् । असावेवाऽसीदेतस्याः कान्त' । परम मेव प्रमोदातिशय प्राप्नुवन्ती च सेय प्रथम परमेश्वराय धन्यवाद समर्पितवती; तत' सश्रद्ध बद्धकरपुटाञ्जलि शीर्ष स्वप्रियतम-पादनलिनयोर्निधाय, तदीयधूलि निजमूर्धनि धृतवती, तदनन्तरञ्च सा निर्निमेषाभ्या नयनाभ्या सदवलोकनतत्पराऽभूत् ।

पथिकस्तु स्वकीयध्यान एवाऽऽसीतावान्निमग्नो यदेतत्सर्वस्य न किमपि भानमभूत्तस्य। प्रेमसद्मनस्सौन्दर्यं समीक्षमाण तदीय मनश्च तावति दूरे प्रययौ, यद्रमणीचरणयोर्मधुरो ध्वनिस्तु तदवाप्तुमेवाऽक्षमत्व भेजे। श्रान्तस्सँश्च मध्यत एव प्रतिन्यवर्त्तत।

पथिकस्य प्रेमनिद्रा नैव भग्ना। तदा कोकिलकण्ठी रमणी मनोहर गीतमेकमगायत्। भग्ना पथिकस्य प्रेमनिद्रा गीतेन तेन। स उदमीलयत् स्वकीयेऽक्षिणी। पुरस्ताद्रमणी विलोक्य प्रलपितुमलगच्च प्रकृत्यानन्द प्रमत्तस्स।

आकर्ण्य त्वेतस्य प्रेमप्रलापमश्रुबिन्दवो न्यपतन् रमणीलोचनयुगलात्। पाणिपुटक सयोज्य सा सुभृशमेव प्रार्थयते स्म पथिकं, गृह प्रति निवर्त्तनार्थञ्चाऽवोचत्। एतदपि सा न्यगादीद्द्-भवान् यदा नैसर्गिकसौन्दर्य्ये विमुग्धो भूत्वा, गेह हित्वा चाऽरण्य समागतस्तदाऽधिगत्यैवेममुदन्तमहमपि भवदन्वेषणार्थं गृहान्निस्सृता। भावत्क प्रिय! शिशुरुभाभ्या भुजाभ्या मा परिष्वज्योदतिष्ठत्, त विमृज्य केवल भवदर्थमेव विपिनमहमुपागच्छम्।

न जाने, क्रियत्सु वा ऽतिगहनभयानकविपिनगिरिनदीनालेष्वभ्राम्यमह प्रमत्तेव ? पर भवान्नैव मिलित। अद्य च जलनिधेरगाधेऽम्भसि कलेवर निपात्याऽसह्यविरहवेदनार्त्तामुक्तिमधिगन्तुमत्र समागतवती, एतावत्येव भवदीय दर्शन सञ्जातम्। अधुना समाकर्ण्य मदीयामभ्यर्थना सानुकम्प गृह प्रतिनिवर्त्ततताम्। नो चेत्! एतया तन्वा दासीय न पुनर्दृष्टिपथमायास्यति।

पथिकस्तु मानव-जगतो दुःखव्रात समुपवर्ण्य त प्रति घोरा घृणा व्यक्तीचकार। तुलनापुरस्सर स न्यदर्शयद्यन्मानवजगदपेक्षयाऽत्यन्तमेव समधिकसुखप्रद कानन नामेति। एव स स्त्रिय तत्रैव सागरतटे विहाय स्वयञ्चारण्यमुपेत्य विलुप्तोऽभवत्। रमणी च मर्माऽऽहता भूत्वा तत्रैव स्थिताऽभूत्।

### द्वितीयः सर्गः

यत्र पथिकस्य तदीयस्त्रियाश्च मियस्साक्षात्कारोऽभूत्, तत्सविध-एवैकस्साधुरपि समुपविष्ट आसीत्। उभयोरप्यनयोः प्रवृत्ति सः सध्या-

नमशृणोत् । यदा पथिक प्रस्थातु प्रवृत्तस्तदाऽसौ माधुवर्य्योऽग्रे गत्वा सदभिमुखोऽभूत् । तस्मिन्नेव स्थले निशीथ तत्पुनर्मेलनवचनञ्चाशृणुत् ।

अथ पथिकोऽर्धरात्रवेलाया तस्मिन्नेव जलनिधिकूलस्थले साधोस्समीप समुपागत । साधुस्त कर्ममयजगता निगूढ रहस्य व्यबोधयत् । कर्मैवच मानवजगत. प्रधान लक्ष्यमिति सुस्पष्ट प्रत्यपादयत् । स पथिक विचाराणा भ्रान्ति समावेद्य, तस्मै पुनर्मानवजगति गत्वा कर्म कर्तु सम्मतिमदात् ।

सोऽब्रवीत्—'मानवस्य समीपे पौरुषमाहसमन्यायश्रद्धाकरुणोदारता-सुशीलतासज्जनताधर्मक्षमाऽऽदिगुण-गणाऽस्ति परमेशितु पावनसम्पत्ति-क्षेप' । सत्यामावस्यकताया ससारे वितरणार्थमेव सोऽय परमेश्वरेण मानव-स्यान्तिके समुपन्यस्तो न्यास । त्व तु निक्षेपमेत मुषित्वा मनुष्यसमाजाद्दूरे ऽत्रकानने पलायित । सोऽयमीश्वर प्रति तावकीनो विश्वासविघात । सम्प्रति मानवसमाजमुपेत्य त्व तत्रैव धर्मनिमपकल्पय । यत्र च यस्य नाम गुणस्य प्रतीयेताऽऽवश्यकत्त्व, तत्रैव त विनियोजय'ति ।

एवमुपदिश्योत्थाय च साधुस्वाभीष्टदेशमगात् ।

### तृतीयः सर्गः

पथिकस्तावदासीदेतावान् ध्याननिमग्नो यत्साधोस्ततो विनिर्गमनमपि नाऽज्ञासीत् स । शनैश्शनैश्च साधोस्सत्यसमस्खलितस्समुपदेश तत्पथैव तस्य चेतस्यभूदङ्कुरित. पल्लवित पुष्पितश्च । स शीर्ष स्वस्योदनयत् । गम्भीर-मेकवार विनि श्वस्य च स्वकीया भ्रान्तिमनुभूतवान् । ततोऽसावुदतिष्ठत् । स्वदेश प्रति मूर्धानमवनमय्य सश्रद्ध त प्रणनाम । तदीयमेवाया जीवन समर्पयितुञ्च स्वकीय सङ्कल्पमनल्प प्रतिज्ञातवान् ।

अथदेशदशाया यथार्थ परिचयमवाप्तुमना असौ देशस्य विभिन्नभागेष्वेक वत्सर यावद् भ्राम्यन्नास । दैशिकी प्राकृतिकी सुषमा समीक्षमाणस्य महदेवाऽऽश्चर्यमभूत्तस्य, यदीदृशे परमरमणीये देशे निवसन्तोऽपि तदीय-निवासिनः किमिर्वेतावन्तो मलिनमानसाः परितो विलोक्यन्ते' इति ।

ततोऽसौ समाजमनुप्रविश्य तत्रत्यामवस्थामवालोकयत् । तदात्वतिममामेव करुणार्द्रमभवद् हृदयमेतस्य। कोटिशो जना ईदृक्षास्तममिलन्, यैस्सन्ध्यावधि जठरज्वालाशामक भोजन नोपलभ्यते । कियन्तोऽप्येतादृशा मिलिता, ये खलु निराहारा एव भुवि लुठन्ति । कृषीवलवर्गा. सुघोर परिश्रम्य धरण्या धान्यमुत्पादयन्ति, किन्तु, हन्त ! ते स्वय कण-कण प्रति व्याकुलहृदयादशुष्यन्ति । चकितास्सन्तस्ते चिन्तयन्ति यत्—को नाम तेषा मुखतस्तदीय कवल बलादाछिनत्तीति । अस्ति समाजे वैमनस्यस्य, दम्भस्य, विश्वासघातस्य, छलस्य च प्राज्य साम्राज्यम् अनीतिरधर्माऽऽचरणाच्च जना स्तृणमात्रमपि नो बिभ्यति । सत्य, धैर्य, विश्वास', सज्जनता, पौरुषञ्चे' त्यादयो गुणा एकैकपणमूल्येन विक्रीयन्ते । सामाजिक्या एतस्या दुर्दशाया वीज तु दारिद्रचमेवे'ति ।

इत्थ समाजदुर्दशामवेक्ष्य पथिक' समस्तमप्येतद्राज्ञो दोषेण भवती'ति सुस्पष्टमवाबोधि । राजा प्रजाया अभ्युन्नति नैव कामयते । स: समीहते यत्—प्रजा यदि चरित्र—विहीना, तदीय आत्मा च पापपरिच्छन्नो भवेत्, तर्हि सा न कदापि राज्ञस्समक्ष शीर्षमुत्थापयितु साहस विधास्यति, राजदण्डात् सदैव च भेष्यतीति महीपति मनाक् शिक्षामपि प्रचालयति, किन्तु सा केवलमेतावत्येव, यावत्या शासनयन्त्र सौविध्येन प्रचलेत् । राजाऽत्यन्तमेव निरङ्कुशः । स स्वकीय स्वार्थमेव नीति, स्वकीय वचनमेव च राजाज्ञा मन्यते ।

सन्ति प्रजाया कियत्योऽपीदृश्य सद्विचारसम्पन्ना अपि व्यक्तयो यासा हृदयेषु देशभक्ते, समाजसेवायाश्च भावास्समुल्लसन्तितराम् । ता हि देशस्य जातेश्च कल्याणार्थं मरणादपि नैव बिभ्यति । राजभीतिविनिर्मुक्तास्ताः प्रजाया निर्भीकताया, साहसस्य, सत्यनिष्ठायाश्च भावान् भरितु प्रकाम प्रयतन्ते, पर दु खनिवृत्तेर्यानुपायास्ता. प्रदर्शयन्ति तारचेत्ता अन्वसरिप्यन्नपि तर्ह्यवश्यमेव दानवर्पाग्रिम भविष्यत्कालीन चित्रमाकृष्टमिवैवस्मिन्नेव दिवसे समागमिष्यन् ।

तासु केचनैतादृशोऽपि जना विद्यन्ते, ये हि देशभक्तिं जीविकाया एकं साधनं प्रकल्पयामासुः । केऽप्येतादृशा, ये खलु प्रशंसामात्रं कामयन्ते । कियन्तोऽपि च तादृशाः, ये नाम राज्ञो द्वेषवशात् प्रजाया पक्षं गृह्णन्ति । सन्ति च केचनैतादृशा, ये नूनं राजानं निर्भर्त्स्य तिरस्कृत्य च स्वकीयं किमपि प्रयोजनं साधयितुं प्रजाया पक्षं प्राप्नुवन्ति, सिद्धे च प्रयोजने राज्ञि समिलन्ति, निरपेक्षा वा जायन्ते ।

तामिमां देशस्य दुर्दशां समीक्ष्य पथिको निश्चिनेन चेतसाऽपूर्वेण चोल्लासेन देशसेवायां तत्परस्सन् प्रावर्तत ।

दीनजनानामविरतमेवाऽभवत् स्मरणं तस्य सहृदयस्य मानसे, करुणा-प्रवाहश्च सुतरां प्रवहन्नासीत् । अतश्च सोऽपि दीनजनसमानमेव जीवनं निर्वोढुमारभत । नाऽसौ कञ्चिदपि जनं जुगुप्सति स्म, नाऽपि च कस्मैचिदप्यद्रुह्यत् । स प्रेम्णः प्रतिमा, आनन्दस्य स्तम्भः, भुवो भूषणञ्चाऽभवत् ।

अनन्तरमसौ पुनर्देशे ग्रामं-ग्रामं प्रजाया कष्टकथा समगृह्णात् । राजकर्मचारिणो नैकविधानि षड्यन्त्राणि विरच्य तं स्वकीयात् कर्मणश्च्यावयितुमकामयन्त, परं तदीयो उद्यमः उत्साहस्तु मार्गाऽऽगतं समग्रमपि प्रत्यूहव्यूहमपाचकार ।

पथिकस्य सहिष्णुता, तदीयं देशानुरागञ्च निरीक्ष्याऽत्याचारैरतितमामुत्पीडितायास्त्रस्तायाश्च प्रजाया मानसे पुण्यं समुदियाय । तस्या हृदये बलवती शुभाशा जागरिताऽभूत् । समार्पयच्च सा पथिकाय स्वीयतनुमनोधनानि । पथिकोऽखिलजनमानसानां केन्द्रतामाप । प्रजाऽजानायत्—प्रभोरभिमुखं परम्परया कृतानां तस्याः प्रार्थनानां परिणामरूप एव पथिकस्ताः प्राप्त इति ।

अथैकदा पथिको राजसभामुपाजगाम । राज्ञः पुरस्तादसौ प्रजायाः समस्तामपि दुर्दशां समुपवर्ण्य तदर्थं सुव्यवस्थां शान्तिञ्च तं समयाचत । प्रशासने पथिकेन विहितां समालोचनाञ्चाऽऽकर्ण्य राज्ञोऽसह्यः क्रोधः प्रोदभवत् । तेनाऽसौ पथिको राजसभातो बहिर्निस्सारितोऽभूत् ।

स्वप्रयासे नैष्फल्यमवधारयत पथिकस्य महत्येव चिन्तोदपद्यत। किन्तु, ततोऽपि नाऽभवत्तस्य हृदयं विचलितम् । यो हि लोकमेवातनुष्ठातुं प्रवृत्त, स कथं नाम मानापमानयो निन्दास्तुत्योश्चाऽभिनिवेशेन मार्गभ्रष्टो-भवितुमर्हति ?

पथिको नैकशो राजानमुपगतवान्, सुशासनसम्पादनसम्मति—ञ्चास्मै प्रादात्, पर स नृपतिस्तु तदीयेपूपदेशेषु न किमपि ध्यानं प्रायच्छत्।

प्रजाया कष्टनिवारणमनिवार्यमवधार्य सोऽन्तिम साधनमधिशिश्रिये । नगरे-नगरे, ग्रामे-ग्रामे, गेहे-गेहे च भ्राम-भ्राम सः स्वल्पीयस्येव समये प्रत्येकव्यक्ते हृदये तामिमा भावनामभरद्, यत्—प्रजा राज्ञा सह सर्व-विधमपि सम्बन्धजातं सर्वथा परित्यजेदिति ।

'प्रजासु राजा यदप्याचरति, तत् प्रजाना साहाय्येनैव । प्रजाश्चेद्राज्ञा सह सम्बन्धमुत्सृजेयु नूनं, तर्हि किमु नामैकलो नृपति कर्तु प्रभवेत् ?'

अन्यायिनोऽधर्मिणोऽत्याचारिणश्च कृते सहयोगप्रदानं सुमहत् पापम्। यावत् प्रजा एतस्मोऽस्मान्न निर्वर्तिष्यन्ते, तावत् तासा कष्टं न प्रणं-क्ष्यति, इति ।

### चतुर्थः सर्गः

पथिको यदा पाथोधितटे विसृज्य स्वकीया स्त्रियमगात्, तदा यस्माधु-बर्य्यो मार्गे मिलित्वा तमर्धरात्रवेलाया तस्मिन्नेव स्थले सर्मेत्य मिलितु-मामन्त्रयत, स एव तस्य स्त्रिया अन्तिकमागत्य तस्यै इमा सम्मतिमदाद्यत्—त्वमेहि स्व गृहम्, पथिक पुनस्त्वा प्राप्स्यतीति ।

समुपलभ्य साधोराश्वासनं पथिकपत्नी गृहं प्रतिन्यवर्तत। सा प्रत्यह-मा च प्रभातमा च सन्ध्याकाल पथिकस्य पन्थानं निभालयन्त्यासीत्। अशनवसनयो जलपानादेश्च न किमपि भानमभूत्तस्या । निद्रा तु तदीया-भ्यामक्षिभ्यामभिद्रुतेव न कदापि तामुपायाति स्म । पथिकविरहव्यथया-ऽविरतं शुष्यन्ती साऽत्यन्तमेव कार्य्यमापेदे । केवलमवलोकनलालसा-सलग्नलोचनयुगलप्रबलाऽप्रवृत्त एव सा जीवन धारयन्त्यभवत् । स्व-

कीयस्य शिशो पालनपोषणयोरपि न किमपि ध्यानं दधौ। तस्मै प्रकारेणै-केन व्यस्मार्षीदेव। नक्तन्दिनं निजप्राणनाथस्य नामग्राहं सा तु केवलं विललाप।

अथैकस्मिन्नहनि युगपदेव कतिचित् पान्था स्तं ग्राममनयिषु, यत्र हि पथिकपत्नी न्यवात्सीत्। श्रमापनोदनाय, जलपानाय च ते कूपमेकमध्य-तिष्ठन्। ग्रामवासिनः कतिचन जना अपि तत्र समवेता अभवन्। तान्—ग्रामवासिनः—प्रति ते स्वीया मनोव्यथाश्च कथयितुमलगन्।

तेऽवदन्—'आस्माकीनं नेतारं पथिकं नृपतिर्न्यगृह्णात्। तस्मिंश्च-राजद्रोहाऽभियोगं प्रकल्प्य स तस्मै मृत्युदण्डमदापितवान्। तदनुसारश्वो ह्यसौ राजाऽऽज्ञया प्राणैर्वियुक्तो भविष्यति। वयं तु तस्याऽन्तिमदर्शननिमित्तं राजधानीं प्रयामः, यतो ह्यस्मदीयकल्याणार्थमेव पथिकः स्वान् प्राणानु-त्स्रष्टुं सन्नद्धोऽस्ति। अस्ति स पुण्यात्मा। तदीयदर्शनतोऽस्मदीयान्यघानि दूरीभविष्यन्ति'-इत्येवं सलप्य रुदन्तो विलपन्तश्च ते पान्था राजधानीं प्रति प्रतस्थुः।

ग्रामे प्रतिगृहं, प्रतिजनञ्च विद्युत्सचार इव प्रससार सोऽयं वृत्तान्तः। पथिकपत्नी यदोदन्तमेनमशृणोत्, तदा सा पथिकस्य पावनाऽवलोकन-समुत्कण्ठया नितान्तमेवाऽऽह्लादितहृदया समजायत। किन्तु सहैव नीत्वा सैव राजपुरीं प्रति तयाऽतिवेगेनोच्चलिता, यथा—पिपासाऽऽकुलः प्राणी पानीयं प्रति प्रधावति। ग्राम्या स्त्रियः, पुरुषाः, बालाः, वृद्धाः, युवानश्च, सर्वेऽपि पथिकविलोकनलालसया समन्वधावन्।

आसीत् कारागारस्य पुरतो लोहशृङ्खलानिगडितः पथिक उपविष्टः। तदीयं मुखमण्डलं शान्त्यै, आनन्दाय, लोककल्याणायच जीवनोत्सर्ग-प्रकाशस्याऽऽभया समुद्दीप्तमदृश्यत। तस्याऽभिमुखमसंख्या नार्यो नराश्च —येषु—धनिकाः, निर्धनाः, श्रमिकाः, कर्षकाः, साधवः, सन्यासिनश्चेति समग्रवर्गीया लोका आसन्,—भीषणवाननाभाराभिभूतानि हृदयानि कथमपि निरुन्धन्तः स्थिता आसन्। अनिमेषनयनैस्तस्मैऽपि पथिके दत्तदृष्टय

आसन्। निहितमासीत्, पथिकस्य पुरो हालाहलपूरितं पात्रमेकम्, यदाज्ञाऽऽज्ञया निपीय प्राणानसौ परित्यक्ष्यति।

एतस्मिन्नेवावसरे जनसम्मर्दमुद्भिद्य वायुवेगतश्चोपेत्य पथिकपत्नी पथिकस्य पुरः स्थितं गरलपात्रं समुत्थाप्यापात्। प्रजाजनाश्च हाहाकारं चक्रुः। पथिकपत्नी तु पथिकस्य चरणरेणुं मूर्ध्नि निधाय न्यगादीत्—'प्राणनाथस्यार्जितमनुचरणेऽद्याऽहं यादृशं सुखमनुभवामि, तादृशं सुखं न पुनः कदाप्यवाप्स्यामीति।

तदनु महतैव प्रेम्णोऽतिशयेन सा पथिकमकथयत्—हे गृहत्यागिन्! प्रकृतिप्रणयिन्!! प्राणनाथ!!! नाहमलन्तव भावत्कीं सेवां विधातुम्। ममापराधान् क्षमस्वेति।

हालाहलप्रभावात् सा नातोऽधिकं किमपि जल्पितुमपारयत्। स्वामिनो मुखं निभालयन्ती च सैव क्षणमात्रेणैव प्राणानुत्ससर्ज।

पत्न्याः प्रणयपूर्णं वचनमेतदाकर्ण्य पथिकस्य विलोचनाभ्यामश्रुबिन्दुद्वयं न्यपतत्। तत्क्षणं च सर्वेऽपि दर्शकाः पथिकपत्न्या आत्मत्यागमवेक्ष्य चित्रलिखिता इव तूष्णीमतिष्ठन्। पथिकस्यात्मजोऽपि जनन्याः पृष्ठत एव जनसम्मर्दान्निःसृत्य समायात आसीत्, आसीदज्ञातबोधो बालकः। नहि तस्यैतद्ज्ञानमप्यासीद्यत्—मदीया जननी लौकिकबन्धनतो मुक्तिमधिगतवतीति। मातरमुपगम्य सोऽब्रवीत्—'अम्ब! गृहं चल, बुभुक्षा मां बाधते। एकलोऽहं कुत्र कथङ्गच्छेय'—मिति'।

बालस्य मुग्धां वाणीमाकर्ण्याऽनभिज्ञजनतायाः हृदये करुणासमुद्रस्समुद्वेलितस्सन् कल्लोलानास्फालयामास। राज्ञो भयं तृणमिवापि नो गणयन्त्येका सम्भ्रान्ता नारी सहसाऽऽजनसम्मर्दान्निःसृत्य शिशुमङ्के नीतवती, मुहुर्मुहुश्च तमिमं लालयन्ती चुम्बितवती।

तदैव राज्ञो दूतो जनतासम्मर्दमुद्भिन्दस्तत्रोपस्थितोऽभूत्। असौ जनतां सम्बोध्य पथिकस्यात्मजस्य राज्ञः समादेशमुच्चैस्स्वरेणोदघोषयत्। सोऽजूघुषत्—'भूपतिः पथिकं स्वीयं प्रजाजनोऽयमित्यवबुध्य सदयं विष

पाययित्वेम निहन्तुमाज्ञापयत्, यस्मादेतस्य कष्टं न भवेत्। परन्तूपलभ्यै- तस्याऽपराधवृत्तान्तमभूदत्यन्तमेवोद्विग्नहृदयाऽस्य पतिव्रता पत्नी स्वस्य स्वामिनः पापपङ्किलात् कर्मण, इत्यनो हेतोस्मा लोकलज्जावशात् 'किल हालाहलं पीत्वा स्वकीयं कायं तत्याज ।

अतश्चाऽयमेव पापी पथिकस्तस्या मृत्योरेकमात्रमस्ति हेतु । घटनयाऽनया महाराजोऽत्यन्तमेवकुपितोऽस्मि, स चाऽस्याङ्गमङ्गमुच्छिद्य व्याकुलं विह्वलञ्चेम मुहुर्मुहुर्विधाय मारयितुं ममादिशत्। यद्यमो निजाप- राधमुररीकृत्य क्षमामभ्यर्थयेत, तर्ह्यवश्यमेव नृपतिरात्मजस्याऽस्य प्राणदानं करिष्यति; नो चेदेतस्यैवाऽपराधात्तस्याऽपि शिरश्छेत्स्यति सत्वर मेव । यतस्तावद् विषवृक्षोऽयं समूलं विनश्ये'दिति ।

एवमुद्गीर्योत्तरमाकाङ्क्षमाणो राजदूतः पथिकं प्रत्यवेक्षितुं प्रावर्त्तत । पथिकस्तावदुत्थाय प्राऽब्रवीत्—'आजीवनमपि मया राजप्रजयोरुभयो रपि हितं समीहितम् । न च किमप्यपराद्धम् । अन्तरात्मा हि मां निर्दोष- मावेदयतितमाम् । तदा कस्मात् कारणात् क्षमामहमभ्यर्थयेये'ति ।

पथिकस्योत्तरमाकर्ण्य राजदूतः स्वसमीपस्थान् वधिकान् प्रत्यवोचत्— 'पथिकपुत्रस्य मूर्धानमाछिनत्ते'ति ।

एको वधिकस्तु झटित्येव स्त्रिया अङ्कादाकृष्य बालं खड्गेन तस्य शिरश्चिच्छेद । स्त्रियो विलोक्य क्रौर्यकलुषितं कर्मैतत्, परमकरुणोत्पादिकां पीडां सोढुं नाऽशक्नुवन् । मूर्च्छितास्तस्तन्यश्च भुवि न्यपतन् । सर्वेऽपिजना क्षोभातिशयेन, भयातिरेकेण च प्रावेपन्त ।

राज्ञो नृशंसकृत्यमेतद्युवकाना कृतेऽसह्यं सञ्जातम् । जननसंदमना- युर्वन्त एतदभिदधतश्च तेऽग्रत प्रययुर्न्—'अन्यायिन एतस्य नृपस्याऽन्तं कुरुत । पृथ्व्याः पापभूतमेतमपहरते'ति ।

पथिको युवकजनानामावेशमिममवेक्ष्योदस्थात् ।' हस्तमुच्चै कृत्वा च सोऽस्यमभ्यधाद्—'अये प्रियबान्धवा ! क्षणमात्रं विरमत, मदीयं विनि- वेदनमाकर्णयत । क्रोधदशायां भवन्तः स्वयं न कमप्यपराधज्ञानं विदधतु ।

राजदूतो वधिकश्चेत्युभावपीमौ राजाऽऽज्ञापालनमकुरुताम् । नाऽनयोः कश्चनाऽपि दोषः । नृपाऽऽज्ञापरिपालनं नूनं मनयो धर्म्मः । एतयोस्स्वामिभक्ते-स्समादर कुरुत ।'

'संसारेऽस्मिन् नाऽस्ति कोऽपि ममापराधकर्ता । नाऽस्ति च मदीये हृदये प्रतिहिंसाया कश्चन भावः । आत्मजो मामकीनोऽस्य आसीत् । तद्-द्वाराऽद्य मदीयस्य सत्यस्य परीक्षणमजायत । तस्य शरीरधारणं सफलमद्य सञ्जातम् । तदर्थं क्रोधो नो विधेय । यदि मदीयाच्छरीरत्यागाद्राज्ञो मानसं भयं प्रणश्येत्, तर्हि कमताऽधिकं मामकस्य कलेवरस्य सदुपयोगमहं सम्पाद-यिष्यामि । रक्तपातकरणं खलु पशुता, मनसो निर्बलता चाऽस्ति । चरित्र-बलेन सपत्नविजय एव सत्पुरुषस्य शोभा विद्यते । स्वयमहं निजस्याऽस्मि, दुःखस्य कारणम् । तर्हि किमिति भवता मनस्सु विक्षोभ उत्पाद्यते ?'

'मया स्वकर्तव्यपालनं विहितम् । प्रत्येकदेशवासिनोऽस्ति पावनं कर्त्तव्यमेतद्यत् स स्वदेशसेवार्थं निजं जीवनं दद्यादिति । तदा किमर्थमेतत् स्वार्थमित्यवगच्छन्ति भवन्त ? क्रोधो हि भावकः प्रबलो रिपुः ; भवतामेव भवने निवसति । तञ्चेद्विजेष्यन्ति, तर्हि निखिलमपि भुवनं जेतुं प्रभविष्यन्ति भवन्तः ।'

'अन्तरात्मनस्सम्मतिमनुगृह्य चलत । न कदापि तस्या अपमानं कुरुत । माभकं सन्देशमिममखिलेऽपि देशे सर्वान् जनान् मश्रावयन्तुनमाम् ।'

साम्प्रतञ्च ममान्तिमोऽयमनुरोधो, नेमं जातु विस्मरन्तु, सचाऽऽ यदद्यतनं दृश्यमनूदृश्य यो हि क्षोभ समुत्पन्नस्तस्य प्रतिशोधमस्मद्देशवासिनो न कस्मादपि नयन्तु,' इति ।

एतावदुक्तवति च पथिके न एव माधुर्यो जलधिकूले पथिकं प्राप्त आसीत्. सहसा जनसम्मर्दाद्गतस्समागत । आनन्दविह्वलोऽश्रुजलप्लावित-लोचनश्च भूत्वा वक्तुमारभत–'हे पुत्र ! धन्यं तावकीनं जीवनम् । सौभाग्य-लम्या जनिमवाप्य नूनं त्वं भुवनं पावनं व्यधा । त्वदीयानि पवित्राणि चरित्राणि स्मारं–स्मारं दुःखेभ्यो देशो मुक्तो भविष्यति । तावकीनं पावनं

॥ श्रीः ॥

कविवरपण्डितश्रीरामनरेशत्रिपाठिरचितस्य हिन्दी-काव्यस्य
संस्कृतभाषायां रूपान्तरितं

# पथिककाव्यम्


प्रणेता :—

**कविरत्न श्री मधुकर शास्त्री,** साहित्याचार्य, साहित्यरत्नम्
('हिन्दीमीमांसान्यायप्रकाश' 'अरुणरश्मयः' प्रभृतिग्रन्थानां रचयिता)





प्रकाशक :—

हिन्दी-मन्दिर, प्रयाग

नाम गृहीत्वा विष्टपं पातकेभ्यो मुक्तिमेष्यति । वत्स ! पूर्णतामगादस्मदीय समीहितम् । नाऽधुना जीवनस्याऽऽवश्यकता । बिन्दुरयमिदानी महाम्बुधौ लयमेष्यति ।

इत्येव प्रोच्य माधुरपाविशत् । समाधिमधिश्रित्य त्रिदिवमधिजगाम च । पथिकः परममेवाऽऽनन्दमाप गुरुवर्यस्य दर्शनेन । क्षणमात्रात् प्रागेव तस्य मनस्यजनि गुरुवरदर्शनस्याऽभिलाष । परमकृपालुना परमेश्वरेण सोऽप्यमस्य तत्कालमेव चाऽऽपूर्यत ।

दर्शकास्तु दृश्यमेतद्वीक्षमाणाश्चित्रस्था इव तूष्णीं स्थिता आसन् । अस्मिन्नेवाऽवसरे राज्ञः कतिपये सैनिका वधिकमेकमग्रतः कृत्वा तत्रोपस्थिता अभूवन् ।

दृश्यमेतद् द्रष्टुं दर्शकाणां साहस न प्राभवत । अत पथिकस्याऽनुरोध ध्याने रक्षित्वा कयञ्चमपि शीघ्र निरस्त्रमस्मे गत प्रवध ।

आसीत् पथिकस्य चेतस्सुप्रसन्नम् । नाऽऽसीच्छ्वासनाया लेशोऽपि तदीये मुखमण्डले । सैनिका वधिकाश्च तस्य शान्ति निर्भीकताञ्च समीक्ष्य नितान्तमेवाऽऽश्चर्यचकिता अजायन्त ।

वधिकैः स्वकीय कृत्यमनिष्यत ।

× × ×

पथिकस्य, माधोः, स्त्रिया, बालस्य च मृत्युसमाचारमाकर्ण्य राजा प्राह—'हृदयमेतदजायत, एककालेनैव विहतास्समस्ता अप्यासन्' इति ।

## पञ्चमः सर्गः

अथ पथिकस्य वधानन्तर राज्ञस्तदमुना शान्तिर्दूरेऽभिव्याप्नोत् । पथिकस्य मृत्युना जना इयन्तो व्याकुलहृदयाः सञ्जाता यत्—ते वेदनाया मूलभूत हेतुमेव विस्मृतवन्तः । प्रकारेणैकेन शोक व्यस्मरन्नेव ते । उच्चैस्त्वनीचैस्त्वयोर्भाव एव तेषां विनष्टः । न कोऽपि केनाऽपि सम ममभाषत, न च कस्यामपि सभायां, गोष्ठ्यां क्वाऽपि जनसमाजे वा कोऽपि सम्मेलन

साध्वमन्यन । सर्वेषामपि हृदयेषु काऽप्यद्भुता पीडानिलीनाऽभूत। प्रस्या वेदनातो मूका इव तेऽजायन्त ।

देशस्य तदिदमौदासीन्यमसह्यमजायत नृपतेः कृते । स्वयमेवाऽनुतिष्ठति तावदत्याचारपरो जन स्वस्य विनाशाय प्रयासम् । प्रजाजनानां मनांसि परीक्षितुकामेन भूपेन सोऽप्यनादेशः समुद्घोषितो यत्—'पथिकस्य गृहमपि प्रणाशयत । येन न किमपि लक्ष्माऽवशिष्येत तस्याऽस्मदीये राज्ये । पथिकस्य च येऽप्यनुयायिनस्तानपि निगृह्याऽस्मत्समक्षमुपस्थापयने' ति।

राज आज्ञाया पथिकस्य पावन नामधेयं श्रुत्वा प्रजायास्त्वीपस्य दु खस्य स्मरणमजनि । सा जागरितेवाऽभूत् । देशस्य वृद्धपुरुषा, वृद्धा नार्यश्च, युवकाः युवतयश्च, बालका बालिकाश्च, विद्वांसो मूढाश्च, कृषीवलाः, श्रमिकाश्चेति सर्वेऽपि पथिकस्य नाम मुहुर्मुहुरुच्चार्योच्चार्याऽरोदिषुः । यदा चाश्रुभिस्सह प्रवहत्तेषां हार्दिकं दुःखं मनाङ् न्यूनतामाप, तदा ते स्व कर्त्तव्यं निश्चित कर्तुं प्रावर्त्तन्त ।

राज. कर्मचारिण प्रजायास्तामिमां गतिमवेक्ष्य पूर्वत एव भीत-भीता आसन् । ते राज्ञा सह स्वसम्बन्धमुत्सृज्योत्सृज्याऽभिदुद्रुवु. । प्रजाजनानां मनस्सु राजानं प्रति या विरक्तिर्जागरिताऽभून्, तस्या प्रभावेण नृपतेस्सैनिका, सर्वे सेवकाश्च त परित्यज्य स्व-स्व गेहमभियय ।

प्रजा एकस्वरेण राजानं देशाद् बहिर्निर्यातुमादिशन् । मार्गे च तस्य जीवनरक्षाया प्रबन्ध विधाय तास्त देशस्य सीम्नो बहि प्राहिण्वन् । देशे प्रजाप्रतिनिधीनां शासनं स्थापितमभूत् । स्वराज्ये प्रजा पुष्पिता. फलिताश्चाऽजायन्त शनैश्शनै । स्वत एव तासां दुर्गुणा विरलतामभजन् । ज्ञानस्य ज्योतिषा प्रत्येकं मानवशरीरं प्राद्योतत ।

यस्मिन् स्थले पथिक , साधु , स्त्री , बालकश्चेति चत्वारः प्राणान् पर्यत्यजन्, तस्मिन्नेव स्थले प्रजा महामन्दिरमेकं विनिर्ममौ । तस्मिंश्च चतुर्णामपि तेषां प्रतिमा. प्रतिष्ठापयामास ।

यस्मिन्नहनि तेषां निधनमभूत्, तस्मिन्नेव दिवसे प्रतिवत्सरं तत्र मेलक एको लगतिस्म। स च तेषां चतुर्णां नामस्मृतावविरतमादिवसचतुष्टयं भवतिस्म। मेलके देशस्य समीपस्था, दूरस्थाश्चाऽपि समस्तप्रान्ताधिवासिनो जनाः पदयात्राऽऽनन्दमाजुषन्त सम्भूय समागच्छन्तिस्म। ते हि पथिकं प्रणमन्ति स्म। तस्य गुणान् सङ्कीर्त्य लोचनयुगलेभ्यो जलमौक्तिककणान् पातयन्ति स्म, निजं जीवनमपि च तादृशमेव सम्पादयितुं प्रतिज्ञाय गृहान्प्रति निवर्त्तन्ते स्म।

तत्कालीनाः कवयः पथिकस्य पवित्रं चरित्रं समालम्ब्य सुललितां कवितां व्यरचयन्। लोकास्तां सप्रमोदं गायं-गायं निजस्य जीवनस्य मार्गं सुस्थिरमकुर्वन्। शीतकाले यदा गृहाणां बालकाः, स्त्रीपुरुषाश्च निर्धूमामङ्गारिकां परितः उपाविशन्तदा वृद्धजना बालकान् पथिकस्य वृत्तान्तमाश्रावयन्ति स्म। मुहुर्मुहुस्तमिममाकर्ण्याऽपि बालास्तृप्तिं नो लभन्ते स्म। पुनः प्रतिवचनुञ्च वृद्धान् विवशयन्ति स्म।

प्रभातवेलायां गृहकार्यव्यापृता गृहदेव्यः पतिव्रतायाः पथिकस्य पत्न्याः पावनं यशो वारम्वारं गायन्त्यः स्वकीयान् शिशून् प्रबोधयन्ति स्म। देशे शान्तेः सुखस्य च साम्राज्यं समुदजृम्भत। न कोऽपि पव्याधिरवाशिन्, न वा काचिद्दरिद्रता।

इत्थं सत्यनिष्ठो देशप्रेमपरायणश्चैको महापुरुषः स्वात्मशक्तिसाधनाद्देशमेकं नारकीयशासनतो व्यमोचयत्। इति शिवम्।

# प्रथमः सर्गः

[ १ ]

रागरथं रविरागपथ स्वनुरागविनोदविभात,
प्रकृतिभवनगतसर्वविभवतो भव्य शुभं प्रभात,
अहो, एकदा मुदितवारिधेर्वीचिविचुम्बित-तीरे,
समधियपौ, आनन्द इव प्राचीं मृदुसुखदसमीरे ॥

[ २ ]

कश्चन पथिको जलधिसमीरे समधिकधृतानुराग·
विश्वविशालमनस्स्वामी, कृतहर्षविषादविराग ,
पश्यन्नास्ते निर्निमेषमिह कौतूहलसम्वलितः,
प्रकृतिनटीकृतपटपरिवर्त्तो भूमञ्चे किल,ल लित· ॥

[ ३ ]

लोचनयुगलं तरत्यपारे सुषमावारिधिवारिणि,
परं निमग्नं पथिकमन· सौन्दर्य-झरे तलधारिणि,
स्नेहसान्द्रसर्वाङ्गशरीरं, प्रेमविनिद्रोद्वलित,
पीत्त्वाऽऽनन्दसुधारसचषकं रोम-रोम सोल्लसितम् ॥

[ ४ ]

अहो ! तदा कमनीया काचित् स्वर्गरश्मिरिव वामा,
कवेस्स्वप्न इव विश्वविलक्षणतावत् पराऽभिरामा,
सिन्धोरङ्के विलयात्पूर्वं तरङ्गिता सरितेव,
प्रियतमदर्शनतृषिता तस्थौ विशदतटे चकितेव ॥

[ ५ ]

विध्यति विषादकीटः कश्चित् तस्या मानसकुसुमं,
सन्ध्याऽऽवृतोपवनमिव दुःखच्छायाऽऽयासितवदनं,
प्राणेशं स्वं सा चिरविरहव्ययिता वीक्ष्याऽमन्दं,
परमोत्फुल्लोन्पुलकितगात्री महिला प्रापाऽऽनन्दम् ।।

[ ६ ]

अन्धो दृष्ट्वा विश्ववैभवं महादरिद्रः सकलं,—
ग्रीष्मे मध्येदिनं मरुस्थलतृषितः पथिकः सलिलं,
आत्मरहस्यं यथा यतिः संप्राप्य मोदतेऽमन्दं,
ततोऽधिकं सहसेयं विरहव्यथिताऽवापाऽऽनन्दम् ।।

[ ७ ]

परपददलितो यथैव देशः स्वाधिकारमिह वाप्य,
निर्वापोन्मुखदीपशिखेव स्नेहसुधारा प्राप्य,
यथा प्रवासात् पश्चात् कश्चित् पुनर्गृहं स्वमवाप्य,
ततोऽधिकं सुखमाप्तवतीयं स्वं हृदयेशं प्राप्य ।।

[ ८ ]

कौतुकिने नटनागराय सा साधुवादमपि दत्त्वा,
श्रद्धाभक्तिप्रेमोल्लासैर्नमः सती सा कृत्वा,
प्रियतमपादपद्मपरिपूतां धूलिं मूर्धनि धृत्वा,
मुहुर्निभालयति स्म नितान्तं कान्तं हृदये कृत्वा ।।

[ ९ ]

आनखशिखं भृशं हृदयेशं सा समवेक्ष्य विमुग्धा,
सफलं जन्म नयनयोर्मनुते प्रियतमदर्शन-लुब्धा,
यद्यपि पथिकस्यैव पुरस्ताद्रूप-सुरेखा व्यलसत्,
तदपि तदीयं लोचन-युगलं ललनां तां नाऽयत् ।।पद

[ १० ]

निरीक्षमाणो लावण्यच्छविमासीद् दूरे पथिकः
पुनश्श्रान्तरमणीचरणध्वनिमशृणोन्मृदुलं रसिकः
कोकिलकण्ठ्याः प्रियतममानसमोहनकलाप्रवीणा,
ततो नादमारब्धवती ननु विरहमयी स्वरवीणा ॥

[ ११ ]

"कामना काऽपि मदीया नाऽन्या !
प्रभो ! वहेदाभ्यां नयनाभ्यां सन्ततमम्भोधारा,
प्रतिद्वारमभिषिञ्चेज्जीवनमभितप्त रस—सारा,
कठिनयातनोच्छ्वासतरङ्गोऽयं मम दीर्घश्वासः,
हृदयं भित्वा सदैव भवताद् वपुश्च दुःखनिवासः,
ध्वनितां कुर्य्यात् प्रतिपल मवनि मदीय—हा हाकारः,
यस्मात् स्यात् करुणाया हृदये जीवनस्य सञ्चारः ।
कामना काऽपि मदीया नाऽन्या ॥"

[ १२ ]

मिलितं विरतिर्मधुरप्रेम्णस्तस्य जीवन विरहः,
विरहः प्रेम्णो जाग्रद् गतिरिह मिलित सुषुप्तिनिवहः
विरहगीतमाकर्ण्य जीवनं लब्ध्वा प्रेमसमृद्धं,
स्थानच्युतमिव पथिकमानसं वपुषा भूय उद्गतम् ॥

[ १३ ]

मुहुर्निमेषो लोचनयुगले हृदये विरहोच्छ्वासः,
साश्चर्यं रमणीं स तु पश्यति धृतविस्मयविश्वासः,
पथिकोऽवोचत्-प्रिये स्ववसरे भवती मामुपयाता,
प्रेमगृहे निवसामि, मनो मे प्रेम्णः कुटी प्रजाता ॥

[ १४ ]

पश्य प्रिये ! विशालविश्वमपि नयनाभ्या मवलोकय,
अनुभावय, हृदयेन त्वनुपमसुषमाऽऽकर मालोकय,
पुरतस्तेऽयमपारप्रेम्णश्चपलतरङ्गो जलधि:,
कूर्दय, सन्तरेयमस्मिन्निति मे मनोऽभिसन्धिः ॥

[ १५ ]

नवनववेशलासिनी प्रतिपलमेषा चित्र-विचित्रा,
रवेस्समक्षं नृत्यति गगने घनपङ्क्ति स्सुपवित्रा,
अधो मनोरमनीलवारिनिधिरुपरि सुनील गगनं,
मध्येऽनिशं मेघमधिरूढो वाञ्छाम्यहमुड्डयनम् ॥

[ १६ ]

असौ प्रगर्जति महासमुद्रः प्रवहति मलय-समीरः,
प्रिये ! निरन्तरमस्मि विचारादस्मादहो ! अधीरः,
विततस्यास्य विशालसुमहिम्नान्वितवारिधिभवनस्य,
कोणे-कोणे तरङ्ग-तरणिर्भ्राम्येयं सुविलस्य ॥

[ १७ ]

अर्ध दिनकरबिम्बमुदयते जलधितलात् कमनीयं,
काञ्चनमन्दिरशिखरं लक्ष्म्या यथा परमरमणीयं,
स्वीयभव्यभुवि पद्मादेव्याः समानमानयनार्थं,
स्वर्णराजपथमिव निर्मितवानुदधिः स्वागमनार्थम् ॥

[ १८ ]

दृढं गभीरं परमनिर्भयं जलधिरयं परिगर्जति,
तरलतरङ्गोद्वर्त्तनमद्भुतमहो ! मनः परिकर्षति
अतःपरं किं क्वाऽपि समृद्धं सुखं प्राप्नुयात् प्राणी ?
अनुभावय हृदयेन निजेन प्रिये ! अयि कल्याणि ! ॥

[ १९ ]

यदा गभीरं तमो निशीथे जगदावृणोति सर्वं,
तारकनिकरं नभसः पृष्ठे प्रतानयति चारुखर्वं,
सस्मितवदनो जगन्नियन्ता तदाऽऽयाति मृदुगतिकः।,
गीतं तटे गगन-गङ्गाया गायति सुललितगतिकः ॥

[ २० ]

तेन विमुग्धो वियति विलासी विहसति विधुःसमोदः,
विविधपर्णकुसुमैस्सुविशदयति तरुस्तनुं सामोदः,
मोददिमुग्धा मदिरमानसा नदन्ति पक्षिसमूहाः
सुखं श्वसित्वा, क्षिपन्ति गन्धं समुद कुसुमव्यूहाः ॥

[ २१ ]

वनोपवनगिरिनिकुञ्जसानुषु वर्षति वारिदमाला,
मदीय आत्मप्रलयो भवति विलसति नयनजलमाला,
पठ, तृणवीचिगगनघनमध्ये रश्मिषु तरौ विशाला,
प्रियेऽङ्कितेयं मधुरा गाथा विश्वविमोहन—शाला ॥

[ २२ ]

कियती विमला मनोहरेयं प्रेम-कथा मधु-मधुरा,
अस्या वर्णश्रेणिरहं स्यां, जगद्गिरा यति-विधुरा,
स्थिरं पवित्रं महामोददं, शान्तं सत्सुख-कारि,
प्रेमराज्य माः, मनोहारि, भुवनत्रयवैभव-हारि ॥

[ २३ ]

श्रुत्वा प्रेमालापं, दृष्ट्वा प्रणय-विमुग्ध-शरीरं,
जातं रमणी-लोचनयुगलं ह्यरुणिमकान्ति सनीरं,
करबद्धं नत्वा विनिमेषं वीक्ष्य च हृदीश-सुमुखं,
वदति, परमकृच्छ्रादवरुध्य स्वान्तं स्थं स्वं दुःखम् ॥

[ २४ ]

हे हे जीवननाथ ! मानसाधार ! लोचनाऽऽलोक ?
हे प्राणप्रियकान्त ! स्मरणाधार ? शोकपरिमोक !
हे मम मानसमोद ! जीवनज्योतिस्त्वमसि मदीयं,
शतशतशशिजलजातहारिकमनीयं मुखं त्वदीयम् ॥

[ २५ ]

जीवसमाजे त्वां वीक्ष्य ते नयने प्रेम-प्रतिभां,
अर्चति मे चेतो भवदीयां परममनोज्ञां प्रतिमां,
वृणुते मम सौभाग्यिकसुषमा यस्या ललामभाले,
सा ते मूर्तिर्मनोमन्दिरे राजति मे प्रतिकालम् ॥

[ २६ ]

पुनर्गृहीत्वा प्रियतमपाणिं वदति सस्मितं बाला,
सुधां स्यन्दयन्तीव निस्सृता वदनादक्षरमाला,
त्वया ममाऽतुललावण्यस्य सुयशो विमुक्तं गीतं,
गायं-गायं शोभागाथा मोदामृतं निपीतम् ॥

[ २७ ]

त्वमवोचो,–'मृदुतां जलजस्य ज्योतिर्मणिनिकरस्य च,
विधोर्मोहनं, पाटलसुरभिं, शान्तिं सुजनवरस्य च,
रूपं रतेः, काञ्चनं रागं, नीत्वा रसं सुधायाः,
विरचितवांस्ते मुखं विधाता सुख निखिलवसुधायाः॥

[ २८ ]

मन्वानो मम मुख सुधांशु स्वयं चातकोऽभूस्त्वं,
कचजालं मे नीलजलदमिव वीक्ष्य मयूरोऽभूस्त्वं,
नयनजीवनं निजं च मत्वा मां सततमपश्यस्त्वं,—
मम [1]प्रवृत्तिमवोचः प्रिय हे ? प्राणोल्लासं स्वं स्वम् ॥

---

१—प्रवृत्ति—वार्तामित्यर्थः । 'वार्ता प्रवृत्तिर्वृत्तान्त' इत्यम

[ २९ ]

दर्शं-दर्शं, दिवानिशं मे निद्राभरिता सुषमां,
अतुला प्रीति भवानवाप्नोद् ज्ञात्वा मां भृशमसमां,
अहमबोधि—'केवलमवनाविह चावां मेव वसाव',
स त्वमद्य हा ! निर्मोहोऽभू, रीदृङ् निष्ठुर-भावः ॥

[ ३० ]

गृहे विहाय विनाथा मा, मिह भवानागतोऽरण्ये,
अजनि विचार प्रियतम ! सहसा कोऽय तावकहृदये ?,
प्रेमपयोधिर्हृदयमिद चञ्चलजलधे रपि सुमहत्,
सत्यं वच्मि नाथ ! भवतेदं सदा दुस्तर रसवत् ॥

[ ३१ ]

तव सेवार्थं हृदये विलसति योऽसौ मधुरोल्लासः,
ज्यायांस्ततोऽपि किमय नयनक्षारवारिपरिलासः ?,
भ्रूविलासरत एवाऽसौ जडसुन्दरता-रत-गर्वा
विमलयौवनं 'न्युञ्छन' मेषा प्रकृतिः करोति गुर्वी ॥

[ ३२ ]

प्रकृते रूपे समुच्छलति वं मनः प्रेम भवदीय,
स्वयं किन्तु भवताऽपि प्राप्तं नैव प्रेम तदीय,
मूकप्रकृते रतुलनीयशोभा दधती स्वशरीरे,
प्रेमोन्मत्ता भ्रमाम्यह त्विह मुग्धा वने गभीरे ॥

[ ३३ ]

दासीं मां परिहाय जगद्बन्धनमुन्मुच्याऽयातः,
सुदृढोऽगण्यसमय'-समूहः किं विस्मरणं यातः ?
तारुण्यप्रारम्भाऽनेहसि, यदस्थिरे संसारे,—
प्रथमं प्रेमविभातं जातं, तस्य स्मरणाऽऽकारे—॥

---

१—समयसमूहः—प्रतिज्ञावर्गः ।

[ ३४ ]

मग्नोऽभूत् क्षणमेकं पथिकश्चैवं समुदमवोचत्,
प्रिये ! त्वयैवोद्घाटितमेतत् प्रेमद्वारं सुखवत्,
हृदयं भित्त्वा मधुर-प्रेम्णो दर्शितमद्भुत—रूपं,
सौन्दर्योपासकं त्वकार्षीः, मां प्रदर्श्य निजरूपम् ॥

[ ३५ ]

वीक्ष्याऽतुल्यलावण्यविलासं तव मुग्धं मे चेतः,
यस्त्वां रचयामास, स कीदृक् कलितकलैकनिकेतः,
तदीयदर्शनवाञ्छा प्रबला समुल्लसति मे हृदये,
रूपराशिपरिमार्गणचेता भ्रमाम्यरण्ये, सदये ! ॥

[ ३६ ]

अद्य दया जाताऽस्ति तदीया जडता गता हृदयतः,
जले स्थले सर्वत्र दृश्यते स खलु विश्वजनदयितः,
तेन सार्धमेवाऽस्ति मदीयं जागरणं, शयनञ्च,
निशा, दिनं, सन्ध्या, प्रभातमपि रुदनञ्च स्मयनञ्च ॥

[ ३७ ]

कमलकलभहरिसरोलतागिरिकम्बुकुसुममुकुलानां,
प्रवालदाडिमशशिशुकपिकमृगकेत्वलिशुक्तिकुलानां,
जडखगपशूपमेया तावकतनुः प्रिये ! तुच्छेयं,—
सदा सुन्दरी प्रकृतिस्ते यौवनमस्थिरमिति मेयम् ॥

[ ३८ ]

अहो, तदीयाऽऽनन्दवर्णने पदवन्ध्या मे भाषा,
तां न विमोक्ष्याम्यहं त्वयाऽतो विमुच्यता नु ममाशा,
स्वामिमुखादाकर्ण्य विरक्तिं मर्माहतेव तरुणी,
वाष्पवारि परिमुञ्चति विवशा, क्लिन्ना बभूव धरणी ॥

[ ३९ ]

वदति, वियोगव्यथामसह्यां विषमामिमां विषह्य,
शरण मवाप्नुं जलधितलेऽहं समागता परिषह्य,
तर्ह्ययेयं प्रतिमा तीरे यदि न दृष्टि मायास्यत्,
तर्हि वेदनातोऽद्यनिश्चिता मुक्ति र्मा समवाप्स्यत् ।।

[ ४० ]

निर्मम पथिक इव त्वं तूर्णीं गतो गृहं परिमुच्य,
अहमपि भवत्पृष्ठतो याता सपदि वृत्तमुपलभ्य,
अन्विष्यन्ती क्व-क्व गताऽहं ? गिरिषु च विजनवनेषु च,
उन्मत्तेव नदीतीरेष्वथ घनध्वान्तगहनेषु च ।।

[ ४१ ]

प्राणनिरोधाऽक्षमे यदा मे सर्वाङ्गे नैराश्यं,
मृत्युद्वारि तदा त्वं मिलितो निर्भाग्याया भाग्य,
सर्वप्रथमं स्तन्यं दत्वा यस्य सुकोमल-वदने,—
मग्नाऽऽसमहं नव्याऽनिर्वचनीयपरमसुखसदने ।।

[ ४२ ]

—प्रसूनमृदुलं तस्य शिशो राबद्धभुजद्वयपाशं,
छित्वा कुलिशकठोराऽह हा ! भवते भ्राम्यन्त्यासं,
"अम्ब ! अम्ब ! " इति वदन् नयनयोर्जलं वहन् सोऽधावत्,
हा ! तद्दृश्यं क्षणमपि विस्मृतिमेति न मे करुणावत् ।।

[ ४३ ]

आतपवर्षाशीतेभ्योऽह हन्त ! प्रकाममार्त्ता,
लोचनवलतश्चलति केवलं तनुरेवा दुःखार्त्ता,
ऋतुराजो राजति, परिलसिता नवलपल्लवैर्लतिकाः,
प्रेक्षन्ते स्वैः प्रसूननेत्रै र्वनमुपमामिह रसिकाः ।

[ ४४ ]

चित्वा-चित्वा सुमानि मालां गुम्फित्वा न यदा त्वां,—
लभे स्मरन्ती निधाय वक्षसि शये तदैत्य निराशां—,
सहसाऽऽकर्ण्य भवत्कण्ठध्वनि ममृतोदधिमग्नेव,
वनवर्त्मनि धावामि द्रुत माः ! प्रबलयन्त्रलग्नेव ॥

[ ४५ ]

क्वाऽपि न मिलति भवास्तु यदा मा तदोन्नीय ते नाम,
प्रतिध्वनति हे नाथ ! सरोगिरिनिर्झरसरितां धाम,
अधुनोपेहि निजं भवनं नोपेक्ष्याऽर्थना मदीया,
यदि न चलिष्यसि, तर्हि मिलिष्यति तनुः पुनर्न मदीया ॥

[ ४६ ]

पथिकोऽवोचत्—'प्रिये ! श्रुतं भोः, सर्वं वचस्त्वदीयं,
प्रतिगच्छति नो हृदयस्रोतस्त्वेतत् किन्तु, मदीयं,
यदि मयि तेऽस्ति प्रेम निर्भरं करुणोद्वलितहृदयतः,
तर्हि वञ्चितं मा कार्षीः, मां देवि ! प्रकृति-प्रणयतः ॥

[ ४७ ]

कायवासनातृप्तेः साधनमेव प्रणयो यत्र,
वाक्-चातुर्यं सत्यमथ भ्रमगतिनिर्णयो यत्र,
झञ्झावातश्चलति यत्र हिंसाया हृदये-हृदये,
सौहार्दे विश्वासविघातो, निहितं छद्म च विनये ॥

[ ४८ ]

स्वार्थवशादन्यायिजनेष्वपि रागो ध्रियते यत्र,
स्वार्थवशादथ सौदर्य्यस्य च हननं क्रियते यत्र,
सत्यभाषणं, स्नेहः , सद्गुणगणप्रकाशो यत्र—,
स्वार्थनिमित्तं; कथं शिवं स्यात् ? हन्त ! जनानां तत्र ॥

[ ४९ ]

पुण्यचरितसज्जनतो विषयी कल्मषमध्यनिवासी,
न्यायिजनाद् वञ्चकोऽत्र दातुःकृपणःसुखी विलासी,
यत्र श्रमिकात् क्रयी विक्रयी कुलटा तथा सतीतः–,
सुखिन्यहो! अन्यायो,विपिन वरं विषमजगतीतः।।

[ ५० ]

चौर्यजार्यवञ्चनपरपीडनकपटमयाऽऽडम्बरतः,
ओत–प्रोतं मनुजजीवनं यत्र च मद—मत्सरत.,
सर्वनाशपथ इव प्रमत्ताः कृत्वा दुन्दुभि—घोषं—,
यत्र फलाशानिशङ्का धावन्ति विमूढा जोषम् ।।

[ ५१ ]

आर्त्तध्वनेरसौ किल जनिभूः, प्रलय–क्रीडाक्षेत्रं,
वैरसुसज्जागृहं, शासनं सन्देहस्य च जंत्रं,
विष्टपमिदमगणितयपापानां सुमहानभिनय-मञ्चः,
आत्महननमय पश्चात्तापो भृशमिह जनिप्रपञ्चः।।

[ ५२ ]

अत्र नु परितः प्रिये! विस्तृतं केवलमेक दुःख,
क्षणिकं सौख्यं यदपि दृश्यते, तदपि विपाके दुःखं,
मायामिथ्यामृगतृष्णाछलबलप्रलोभनशाला,
इदं जगन्नैराश्यशोकयोर्महती क्रीडाशाला ।।

[ ५३ ]

छत्रमिव नु[१] 'बब्बूलाऽरण्यं विलसति वारिधि–तीरे,
कण्टकनिकरं निगोप्य शीतच्छायादायि–शरीरे,
भ्रान्तपथिकमाकृष्य नितान्तं कष्टं यच्छति परमं,
शाठ्यमृते लोकेऽस्ति किमन्यत्? कथयैतद् मम परमम्।।

---

१—'बब्बूलः—' 'बबूल' इति हिन्द्या प्रसिद्धो वृक्षविशेषः।

[ ५४ ]

काञ्चन-कणसमरेणुमवेक्ष्य तु तीरे मुह्यति सरसा,
दूरदेशतस्तरङ्गमालाऽऽपतति चञ्चला तरसा,
मुहुर्विचुम्ब्य तदीयचरणमथ नृत्यति, गायति, ललिता,
क्वाऽन्यत्रेयं छटा मिलिष्यति? महोल्लाससम्वलिता ॥

[ ५५ ]

पुष्कलपरिमलशालिललितकदलीदलकुञ्जविलासी,
नारिकेलखर्जूरतालकृतस्वागततालोल्लासी—,
शीतलमन्दसुगन्धसमीरः प्रतिपलमत्र समेति,
ताप-तप्तलोकेऽतो ज्यायः कुत्र सुखं जन एति ? ॥

[ ५६ ]

नैव गन्तुमीहेऽहं सम्प्रति पलमपितुः खदजगति,
अभिलाषोऽय, सदाचलेयं, प्रेम्ण.पथि निर्वृतिमति,
वाञ्छाम्यहं, नदीनालानां वेशमहो ! धर्तास्मि,
सोल्लासं गायन् गीतान्यथ शैलादवतर्त्तास्मि ॥

[ ५७ ]

ईहे, सौरभरूपोऽहं सन् निवत्स्यामि वन-कुसुमे,
प्रणयिजनोरसि विरहेषुस्सन् प्रवेक्ष्याम्यसुखविषमे,
कुञ्जे-कुञ्जे वायु रहो, सन् विचरिष्यामि सदाऽहं,
क्लान्ते वनस्पतौ चेतनतां वितरिष्यामि मुदाऽहम् ॥

[ ५८ ]

विकास्य कुसुमं, विरोद्य चटकां, विकल्प्य वल्लिवितानं,
लोकमहो ? अभिषेक्ष्याम्यहमधिरुह्याऽम्भोदविमानं,
जगतो वाप्युच्छ्वासो वा सन् प्रेमकथां गास्यामि,
सुद्धरसिक-वर्गे संगीतं भूत्वा सुखमेष्यामि ॥

[ ५९ ]

हित्वा शान्तं स्वर्गसुखं क्व नु लोकनरकगामी स्यां ?,
कर्पदिकामूल्येनाऽमूल्यं जीवनमणिं विजह्यां ?,
इत्युक्त्वा निर्मोही पथिक. प्रेमोत्कटः प्रयातः,
वञ्चितेव बत ! चित्रितेव सा स्तब्धाऽभवद् व्यथातः ॥

—इतिश्री प्रथमः सर्गः—

# द्वितीयः सर्गः

[ १ ]

मध्यनिशा, निश्शब्ददिशा, गगनं नु निरभ्रं विमलं,
विलसति चैकं विचित्ररत्नं वियति दीप्तिमयममलं,
विशदा विभा तस्य लतिकायां सरसि तरोर्दलपटले,
विश्राम्यति तृणनिर्झरवारिषु, सुललितनिशीथकमले ।।

[ २ ]

अनन्तस्य वातायनतो वा दिव्या विपुलविमलता,
स्फुरति, सकलशुभधराधाम विक्षालयतीह धवलता,
तृणं-तृणं सुखनिद्रामग्नं वने तदाऽऽसीदतुलं—,
सुखदसुशीतलसुरभिसमीरः 'सन्-सन्' प्रवाति मृदुलम् ।।

[ ३ ]

अथवा दृढकर्त्तव्यपरो वीरस्सुगभीरस्वरतः,
सिन्धुप्रहरी मुहुर्गर्जति स्फुरिततरङ्गाग्धरतः,
चपला वीची रश्मिवसनतो विभूष्य नीलशरीरं,
पणबद्धेवोच्छलति चुम्बितु चारुचन्द्रमतिधीरम् ।।

[ ४ ]

जलनिधिकूलशिलामधिरूढः पथिकः प्रेमोन्मत्तः,
मनोमोदिनीमिन्दुचन्द्रिका पश्यति तद्गत-चित्तः,
अभूत्तदैव कस्यचन मधुरः पदध्वनिस्सुनिकटतः,
ततः प्रतीक्षकपथिकमानसं प्राप विकासं सुखतः ।।

[ ५ ]

कुशं मेखलामजिनं शुद्धं कौपीनं कृशकटचा,
दधदायातः कोऽपि तपस्वी वर्चस्वी मृदुगत्या,
भरितसितं निर्धूमज्वलनप्रायं श्मश्रुलवदनं,
अभूद्द्योतकं सुमहिमसद्गुणतपोविरक्तिसुसदनम् ॥

[ ६ ]

किं वा परितो वदनादुरसो विशदा विभा विभाति,
नष्टा वा सद्वृत्तिप्रसराच्चिकुरकृष्णता, याति,[1]
वीक्ष्य मुनिञ्च समर्प्य प्रणतिं परमोल्लसित-हृदयतः,
पथिकोऽवादीत्–'पुण्यदर्शनाद् धन्योऽहं सुसमयतः ॥

[ ७ ]

इह नीरवनिःस्तब्धनिशायां छायायां हिमरश्मेः,
पश्यश्छटां चन्द्रिकाधौतोदधेर्नीलजलवीचेः,
मनोनिहितभवदीयदर्शनोत्सुकता मयाऽभिलाषः,
इहोपविष्टःसञ्जातोऽहं सफलातुराकुलाशः ॥

[ ८ ]

निसर्गमुदितस्साधुरवोचत्, स्मितपूर्वं प्रियपुत्र !
परममधुरमेतद् भवदीयं वचः सुखं सर्वत्र,
सुखीभव च निःस्वार्थभावनाज्योतिं जगति ज्वालय,
मर्मविस्मृतविभ्रान्तजगत् त्वं सुखमार्गं सञ्चालय ॥

[ ९ ]

प्रभातकाले जलधौ व्यलसन् यदैव तुङ्गतरङ्गाः,
सुजनमानसे जनसेवाया यथा प्रबलतमभङ्गाः,—[2]
संकततटात् प्रकृतिसुषमा त्वं परमविमुग्धो वीक्ष्य,
तन्मय आसीः, दिव्यदशाया निखिलं भुवनमुपेक्ष्य ॥

१–'या अति' इति पदच्छेदः। २–भङ्गाः–ऊर्मयः। 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः।

[ १० ]

अनतिदूरमहमप्यश्रौषं ता ते प्रातर्वाणीं,
तव विशालहृदयस्य महत्तामवाबोधि कल्याणीं,
समं गृहिण्या सकलविवादं ह्यश्रौषं भवदीयं,
व्यलोकयं यद् वर्णे वर्णे व्याप्तं मनस्त्वदीयम् ॥

[ ११ ]

यदा प्रस्थितः शाद्वल हरिते कुसुमितसुरभितविपिने,
त्वया मनाग् जल्पितुमभिलाषो जातो मानसभवने,
द्रुतं चलित्वा त्वया मिलित्वा व्यधा निश्चितं समयं,
चिरादवाप्तुवमद्याऽहं त्विह विलक्षणं सुखनिचयम् ॥

[ १२ ]

कष्टमदां तुभ्यं यदहं तन्न त्वं मनसि विचारय,
एहि, समुपविश, शृणु च रहस्यं किञ्चिद् हृदि निर्धारय,
विमलशिलातलमधिष्ठितोऽयं साधुः परमविरागी,
पथिकोऽप्यभिमुखमेव निषण्णस्त्यक्तगृहोऽप्यनुरागी ॥

[ १३ ]

श्रोतुमना अतिनम्रभावतः स्थिरः समादरभावात्,
पथिको वीक्षितुमारब्धो मुनिवरं समुत्सुकभावात्,
मुनिरवदत्—हे पुत्र ! जगत् त्वं व्यसृजो यत्तु निकामं,
प्रेमामृतमास्वाद्य विमुग्धो विरमसि वने प्रकामम् ॥

[ १४ ]

मृगमालाविलसितकलकोकिलकूजितकुसुमितगहनं,[1]
नवललितलतिकालसितं ह्यलिमुखरितनिकुञ्जभवनं,
हरितधरा गिरिमुर्दधि वीचिं मेघं निरभ्र—गगनं,
वीक्ष्य त्वं कौतुकयुक्तोऽभूर्हृदभूद्विस्मय—सदनम् ॥

---

१—गहनम्—वनमित्यर्थः । 'गहनं काननं वन' मित्यमरः ।

[ १५ ]

वानवेक्ष्य निःस्पन्दोऽभूस्त्वं हित्वा धर्म-विवेकं,
तान्यपि किं ते स्थिराण्यभूवन् ? मुग्ध पथिक ! पलमेकं,
विस्मृत्य स्वामद्भुतशक्तिं वनेऽबोध इव त्वं,
प्रकृतिरूपदर्शनतश्चकितो भ्रमसि मोहितः किं त्वम् ? ॥

[ १६ ]

चरमचरं वा यदिह तु लोके, निखिलं कर्मणि निरतं,
सर्वस्याऽस्ति च काचिदेषणा, व्रतमपि भवति सुनियतं,
आजीवनमातपमिह सोढ्वा छायामवनौ कुरुते,
तुच्छपत्रमप्यहो, कथं स्वं कर्म तत्परं कुरुते ? ॥

[ १७ ]

सागरपक्षी तरङ्गपक्षं समुद्धूय पल-पल मपि,
सदा, मुदा विदधाति भुवोऽस्याःसेवनमपि पालनमपि,
मृदुलो मलयसमीरो गन्धं गृहं-गृहं प्रतिवितरति,
घनः शस्यसिञ्चन हेतोरिह निजं जीवनं च धरति ॥

[ १८ ]

रविर्विशदयति शोभां भुवने वर्षति सुधां निशेशः,
कोऽपि न लोके निष्क्रिय आस्ते, कर्मरतो निदेशः,
लघुनि जीवनेऽपि च तृणस्य किल, भवति किमपि लघु लक्ष्यं,
तदीयपूतविव विधत्तेऽदः स्वतनुं मृति-भक्ष्यम् ॥

[ १९ ]

अमितबुद्धिबलविलसितजन्मा भवान् मानवः श्रेष्ठः?
कस्तद् ध्येयरहित इह लोके ? को न कर्म-पथ-निष्ठः ?
मा शुच, एतद् ब्रूहि मानसे निजे विचार्य च निपुणं,
स्वके जीवने निष्पन्नं किं ? कर्त्तव्यं ते प्रगुणम् ॥

[ २० ]

उदरदरीतो यत्र निपत्य च जन्म गृहीतं भवता,
यस्याः खादितमन्नममृतसमजलं निपीतं भवता,
यस्या धूल्यामक्रीडः सुखमेत्य च यत्र न्यवसः,
यस्या रूपच्छटां वीक्ष्य ते प्रणय उद्रूढो मनसः ॥

[ २१ ]

दयामयी सा स्नेह–प्रतिमा वसुधा मातृसमाना,
तां प्रति काचित् कृतिर्न शिष्टा किं भवतः सविधाना ?
करौ गृहीत्वा यैस्त्वं प्रथमं चलितुं शिक्षित आसीः,
सुशिक्ष्य भाषा हृदयस्याद्भुतरूपं दर्शित आसीः ॥

[ २२ ]

येषां कष्टार्जितघनफलमपि भुक्त्वा महानभूस्त्वं,
दीर्घदेहतो मध्येबाधं निर्भयमुत्थित ऐस्त्वं,
यैरुत्पादितनिर्मितवस्त्रैरावृततनुस्त्वभूस्त्वं,
ग्रीष्मप्रावृट्शीतसमयतो रक्षिततनुस्त्वभूस्त्वम् ॥

[ २३ ]

उपकाराणां तेषां त्वयि किं लेशोऽपि न हे पथिक !
कर्त्तव्यं किं तान् प्रति किञ्चिन्न तेऽवशिष्टं रसिक ! .
दुःखदवाग्नौ ज्वलितान् जगतो दारुणरणपरिदग्धान्,
विपिनमुपेतः कापुरुषस्त्वं हित्वा तान् कृतिमुग्धान् ॥

[ २४ ]

कष्टमात्रमाकर्ण्य नु भवतो विचलितमभवद् हृदयं,
मानवतायाः लज्जास्पदमिममवेहि गर्हितं विषयं,
शुद्धप्रेम्णो मर्म तया तन्महिमानं जानासि,
प्रेमवर्त्मनः पथिक ! प्रेमव्ययार्दितः किं नाऽसि ?॥

[ २५ ]

त्वमुदारस्सन् गृहे-गृहे चेत् सोल्लासस्त्वगमिष्यः,
जीवे-जीवेऽमितप्रेमनिधिमपि च यदि व्यतरिष्यः,
अभविष्यत्, तत् परमसुन्दरं, परन्त्वरे ! कृपणस्त्वं,
स्वयंसुखी सन् स्वार्थग्रस्तं वदसि जगत् सकलं त्वम् ॥

[ २६ ]

चिन्तन् निजहितमात्रमरे ! त्वं गायसि मुदितं गीतं,
प्रत्येकं व्यापृतो त्वया भुवि सुख-पीयूषं पीतं,
जगद् विमुच्य स्वार्थ एव किमु परमं लक्ष्यं भवतः ?
स्वार्थग्रस्तः कोऽस्ति जनः संसारेऽपरोऽत्रभवतः ?॥

[ २७ ]

सद्गुणसाहससत्यशूरता अलौकिकी चोत्तमता,
प्रतिभाप्रीतिप्रिप्राणप्रभुताः पौरुषपरहितममता,
क्षमाशान्तिकरुणा उदारताः श्रद्धाभक्तिविनयिताः,
सज्जनताशुचितामनस्विता धीर्मनसो निर्भयता ॥

[ २८ ]

सोऽयं सम्पन्न्यासस्तुभ्यं जगदीशेन प्रत्तः,
वितरणीय एषः प्रसृत्य च जगतो हिते समस्तः,
तं त्वं प्रचौर्य सकलं जगतो न्यवस इहैवाऽरण्ये,
अरे प्रभोर्विश्वासघातरत ! भयं न धत्से हृदये ? ॥

[ २९ ]

'त्रायस्व न' इत्यार्त्तनिनादः परितः प्राणिषु जातः,
तत्र च किं हितकृति योग्यस्ते नाऽवसरः संजातः ?
भाषणशक्तिर्भावत्को किमु सदुपदेशतस्सफला ?
किं ते भक्तिर्निष्ठुरमनसः सदयकृतेरपि विमला ? ॥

[ ३० ]

कर्णाभ्यां जनताऽऽवश्यकतावार्त्ता किमु श्रुता ते ?
हस्ताभ्यां कस्याऽपि सहायकताऽत्र पथिक ! विहिता ते?
पादाभ्यामार्तध्वनिभुवमपि गमितः कदाचिदपि किं ?
किं नैराश्यनिमग्नजनानपि पर्यष्वज उरसा त्वम् ॥ ?

[ ३१ ]

क्षुत्क्षामाय कदापि जलं वा भोजनमपि प्रदाय च,
जठरज्वालामहिमा ज्ञातस्तत्क्षुच्छमं विधाय च,
मार्गपतितमसहायं कञ्चन जनमपि समुदञ्चोद्‌वा,
गृहे प्रेष्य पृष्ठ नु पवित्रं किं ते कष्टं सोढ्वा ? ॥

[ ३२ ]

मस्तकमुन्नतमभवत् किं ते पथिक ! जातिगौरवतः ?
नो चेत् ! तर्हि शरीरमदस्ते तुच्छमधममपि शवतः,
अन्तर्निभृतमपारवैभवं समुपेक्षस आः ! किं त्वं ?
बाह्यसुखार्थं मुधा किमर्थं भृशं प्रयतसे रे त्वम् ? ॥

[ ३३ ]

सहजं प्रेमाऽवाप्तुं शवतो निकटतमं यत्तु त्वं,
अन्विष्यंस्तत् पर्यश्राम्योऽद्यावध्यन्ध इव त्वं,
त्वय्यलौकिकी शक्तिर्विलसत्यधिका भृशं प्रकृतितः,
प्रकृतिमपि त्वं चकितीकर्तुं क्षमः सहजनिजकृतितः ॥

[ ३४ ]

प्रार्थुक्ष्यया यदि त्व स्वामितशक्ति मनसि विमृश्य,
परमामोदमवाप्स्यस्तर्हि तु चमत्कृतिं परिदृश्य,
चेदुद्दीप्ते हृदये विलसति सत्सुखमयोऽभिलाषः,-
नैव वनं, भवनं गत्वा भव तत्प्राप्त्यै भरिताशः ॥

[ ३५ ]

इदं जगत्तु परीक्षाकेन्द्र मानवताया गहनं,
विकला धिषणा भवति दुरूहं प्रश्न दृष्ट्वा कठिनं,
परं स्वात्मबलविज्ञमानवास्चातुर्येण विमृश्य च,
समादधति सहज तं प्रश्नं सम्यग् धिया प्रबुध्य च ॥

[ ३६ ]

इयं लोककल्याणकामना सेवा जगतश्चैया,
अमरत्वप्रदयश:स्वस्तरोर्मधुरफलालिश्चैषा,
गच्छ, तात ! संसारं गच्छ, न वृथैव समय यापय,
सदा लोककल्याणरतो भव जनुस्सफलता प्रापय ॥

[ ३७ ]

दुःखे बन्धु, व्याधौ वैद्यः, सखा घोरविपदायां,
दुस्सहदैन्ये प्रश्रय, उत्साहो नैराश्य-निशायां,
ज्योतिर्भ्रमे, सम्पदा सुमतौ, सुनिश्चय सन्देहे,
क्रान्तिश्छले, प्रभुत्वे न्यायो, भव धैर्य भवगेहे ॥

[ ३८ ]

जनताया विश्वासे, मनसि च कृतौ, भाषणे, श्रवणे,
निवस, भवाऽऽदर्शस्त्वं विजयी विष्टपरणचङ्क्रमणे,
भ्रमभ्रान्तविपदाढ्यविशृङ्खलजगन्मण्डलभ्रमणे,
रक्ष नितान्तं स्वात्मबले दृढविश्वास प्रतिचरणे ॥

[ ३९ ]

जगतो विषमान् झञ्झावाताघातान् दृढं सहस्व,
स्थिरोद्देश्यवत्, सुविश्वासवदचलः संश्च रमस्व,
जागृहि नित्यं धेहि नितान्तं त्वमुदारत्वं हृदये,
तमसि चन्द्रवच्छान्तो ध्रुववत् सुदृढो भव च प्रलये ॥

[ ४० ]

स्मारं-स्मारं त्वां समुदारास्संयमितस्सुचरित्राः,
जना भवेयुः परविपदाहरयत्ना मुदा पवित्राः,
श्रावं-श्रावं वृत्तं जागृयाद् जनता ते शुभनाम च,
न्यायसत्यरक्षार्थमसूनपि मुञ्चेद्यातु सुधाम च ॥

[ ४१ ]

सुखप्रापकं जगति साधनं केवलमेकं दुःखं,
सद्गुणमर्णं तदेवोद्गमयति, सद्गुणतोऽस्ति च सुसुखं,
बाधा विघ्नो विपत् कठिनता प्रभवेद्यत्र च यत्र च,
गच्छ निर्भयं तत्र ज्वलने खेलं त्वं सर्वत्र च ॥

[ ४२ ]

गौरश्यामोत्तमजघन्यकुत्सितकुरूपरुचिराणां,
नैव विचारो भवति प्रेम्णो राज्ये स्वपरनराणां,
घृणितोऽस्पृश्योऽकिञ्चन जन आः! योऽस्ति जगति किल यावान्
प्रेमप्राप्तेः पात्रं सोऽस्मौ भवता ज्ञेयस्तावान् ॥

[ ४३ ]

सदा सृष्टिसौन्दर्यसमृद्धेः कविसमचिन्तनमाचर,
नो सुखदुःखविचारवशो भव, प्रतिभातिमिरं परिहर,
यत्तु वदसि,—'जगदस्ति महामायाया विषमो जालः',-
तत्तु तावको मुग्ध पथिक हे! बुद्धिभ्रमो विशालः ॥

[ ४४ ]

जगन्नियन्तुः सङ्कल्पादियमवनिः सागरवसना,—
जाता, तस्य च खेलविलासो ह्येषाऽखिलरचना,
जीवानामियमस्ति कर्मभूः, कर्मच्युतिरिह नो स्यात्;
वञ्चनमेवान्यथा भविष्यति, पश्चात्तापो वा स्यात् ॥

[ ४५ ]

काचन दिव्या शक्तिः सृष्टेः सञ्चालनमिह कुरुते,
स्वातन्त्र्यात् सोद्भवं पालनं प्रलयञ्चाऽन्याः कुरुते,
तस्या नियमितकक्ष्यायां ग्रहगणचङ्क्रमणं भवति,
समुद्भिद्य गगनं केतूनामपि सक्रमण भवति ॥

[ ४६ ]

तस्यास्तावर्तेर्वारिदमाला सुधासीकरान् वर्षति,
कोलाहलसंक्रान्तं कुलिशं पतति धरामुद्धर्षति,
तस्या एव च शुभा शुभा प्रेरणा ह्यात्मसम्मतिः शुद्धा,
तस्या एव च कर्म समाचर तत्प्रगतिर्विधिबद्धा ॥

[ ४७ ]

परमविचित्रं जगद्यन्त्रमपि तयैव शक्त्या प्रचलति,
दर्पं मा स्म कृथाश्च कदाऽपि ह्यपि सफलत्वे प्रफलति,
यद्यपि सर्वस्यावश्यक इह लोकहितैकविचारः,
प्रत्येकं मनुजेऽस्ति तथापि स्वदेशजात्यधिकारः ॥

[ ४८ ]

त्वामुत्पाद्य तु देशजाती पोषयतःस्म निकामं,
तौ निजहितकृति विश्वास ते धत्त. सदा प्रकामं,
ततोऽनृणत्त्वप्राप्तिः प्रथमं सत्कर्त्तव्यं भवतः,
ततो दातुमर्हसि वसुधायै सरलजीवनं भवत ॥

[ ४९ ]

यद् वक्तव्यं तत्ते सकलं कथितं प्रिय! मव्यासं,
गच्छाम्यहमुत्तरकाष्ठेनेहि दधामि परमभिलाषं,
अहमपि गृहाद्वहि जीवनस्याऽस्य महान्तं भागं,
व्यपागममममाश्रित्य मूढवद् गिरिनिर्झरवनभागम् ॥

[ ५० ]

प्रभोः प्रेरणातः स्वभ्रममपि वेद्म्यहमत्र यदातः,
हन्त ! शरीरे बलं विक्रमं नैव च लभे तदातः,
विशिथिलसकलशरीरस्यास्यं व्यर्थोऽखिलः प्रयासः,
जनसेवार्थं केवलमास्ते भाषणशक्त्युल्लासः ॥

[ ५१ ]

तथैव शक्त्या यथा साध्यमहमिह निजदेशहितं तु,
कुर्वे, भवति न यावच्छ्रान्तं मस्तिष्कं मे किन्तु,
मया समर्पितमखिलं तस्य च जगत्पतेरिच्छायां,
निरादरे नो मात्सर्यं मे, रुचिर्न मानेच्छायाम् ॥

[ ५२ ]

त्वत्कर्त्तव्यमवोच तुभ्यं मत्कर्त्तव्यदृशाऽहं,
भवान् स्वतन्त्रो यथेच्छमेव सुलभतां जीवनलाभं,
अस्ति सकललोकस्य कुञ्जिका, मस्तिष्कं भवदीयं,
निखिलं विभवमवाप्तुं शक्तस्तमनेन भुवनीयम् ॥

[ ५३ ]

पुनर्वच्मि,—मा भैस्त्व दुःखात् कर्मवर्त्म तेऽभिमुखं,
प्रेम्णः पन्था गहनः प्रेम्णि इह तु दुःखमपि सुमुखं,
कर्म भवेत्तेऽविचलो धर्मः, कर्म भवेत्ते भाषा,
भवतु सत्कर्म निधनमेव च ते वाञ्छामयी शुभाशा ॥

[ ५४ ]

इत्युद्गीर्य सुशान्तसरलभावात् स यतिर्मृदुगतिकः,
वने विलीनः पथिकं कृत्वा वञ्चितमिह सङ्गतितः,
स्निग्धचन्द्रिका चकास्ति रुचिरा पवनः 'सन् सन्' सुवहति,
ज्योत्स्नायां पर्णानि लसन्ति च सलिलं 'छप्-छप्' प्रवहति ॥

—इति श्री द्वितीयः सर्गः—

# तृतीयः सर्गः

[ १ ]

कुमुदपतेरथ मुदितकौमुदी भुवमवतीर्य नभस्तः,
शिश्ये सैकतशय्यायामपि परमोत्फुल्लमनस्तः
शिलामधिष्ठित एव तनुं स्वामग्रे किञ्चिन्नमयन्,
अचलः पथिकोऽचेतन इव विनिमेषदृशं भुवि गमयन्॥

[ २ ]

आसीदतिविकलश्च निरीहो द्यूतपराजितयत्नः,
वेत्ति स्म न,—तं कदा विसृज्य च तूष्णीं मुनिरगमत्सः,
सत्यं वचो मुनेः पथिकस्य प्रेमविशुद्धे हृदये,
अङ्कुरितं पल्लवितं चाभूत् पुष्पितमन्ते समये ॥

[ ३ ]

समनुभवन् निजविशदमानसे किञ्चिदचिन्तितदुःखं,
उदनैषीत् सः क्षणानन्तरं परमविषण्णं स्वमुखं,
सजललोचने गरलविलीने यथा तदाऽस्तां विरते,
सोच्छ्वासं न्यगदीत् पथिकस्तु स्वरे विकम्पनाविवशे ॥

[ ४ ]

हन्त, निजं कर्तव्यं हित्वा, यन्मेऽरमयाहं चपलं,
अतः परं किं नाम भविष्यति जीवनमाः, विफलं,
करबद्धं पुनरह्वे—हे विश्वेश्वर ! गद्गदगीतम्,
जीवनमस्तु सार्थं तव पादच्छाया अनुगामि गुरूदितम् ॥

[ ५ ]

ततो व्यलोकयदयं विशालं नैजं देशं पथिकः,
अहो, जन्मभूः कियती सुखदेत्यगदत् प्रकृते रसिकः,
श्रद्धाभक्तिप्रेमभरेण तु सुमहोल्लाससमेतः,
रोमणि-रोमणि सेवाव्रतमथपरमानन्दमुपेतः ॥

[ ६ ]

अयं जन्मभूमे ! हे पावन, स्वर्ग सुखद, मम देश !
जीवन-कुसुमं स्वमर्पयेऽहं तवपदयो, हृ दयेश,
इत्युक्त्वा चिन्तितुमारब्धः कर्मोचितमुपयोगि,
निदानमनुभवभूते कथं स्यात् साफल्यं सुखयोगि ॥

[ ७ ]

एकवारमखिले निजदेशे प्रथमं त्वहं भ्रमेयं,
बीजं बुद्ध्वा हर्षखेदयोर्ध्येयं मनसि धरेयं,
ततो विनिश्चेष्यामि कर्मपथमहं तथ्यमतविहितं,
धर्मनीतिसंरक्षणमस्तु नु जीवमात्रहितनिहितम् ॥

[ ८ ]

सन्ततमत एकाब्दं यावन्मनसि दृढं निश्चित्य,
देश-दशां पश्यन्नास्ते स्म प्रति प्रान्तमुपसृत्य,
सोऽपश्यत् प्रचुरं प्राकृतिकं सुखं संभृतं परितः,
किन्तु, हन्त ! देशो नितान्तमनभिज्ञो विरस इवेतः ॥

[ ९ ]

स्पृशन् ग्रामसीमानं निर्मलजलकृतकलकल्लोलः,
स्वच्छन्दं प्रवहति सन्ततमिह नालो लहरीलोलः,
अनतिविदूरे हरीतिमाढ्या गिरिमाला परिलसति,
परं मनस्सु तू नातोऽप्याः ! आनन्दज्योतिर्विशति ॥

[ १० ]

क्वचन सुनीलाः शिलाः क्वचन मुकुरोज्ज्वलसरोविलासः,
शस्यश्यामलं धराञ्चलं क्वचिदद्रिनिर्झरोल्लासः,
नारिकेलतरुराजी राजति, गगनस्तंभसमाना,
रसिकजनेभ्यो निषेधसूचकमुप्तनकारसमाना ॥

[ ११ ]

नवलपल्लवितलतावेष्टिता, सुरभितविटपसमेता,
छायाशयिता पर्वतमाला, कुञ्चितमार्गमुपेता,-
सेयं यस्याः सर्वोन्नतताऽविचला यथैव मनसः,
एना वीक्ष्य न को नु जनः स्तादानन्दोद्भवसरसः ॥

[ १२ ]

उच्चैः क्षरति च निर्झर एषा शीतलधारा धवला,
अहो! परमसुखमयी शान्तिरिह सदावाप्यते नवला,
धारातीरे क्वापि शिलोपरि विश्रम्य क्षणमात्रं,
शान्तिमाप्तुमर्हा मनुजा उल्लास्य मानसं गात्रम् ॥

[ १३ ]

मुहुर्मुहु र्बकपङ्क्तिगमनतो धवलकुसुमलसितेव,
क्षितिजतटे घनवर्षणधूमिलघटा सुधानिचितेव,
धान्यहरीतिमसुषमा लोचनसीमावधि परिलसति,
कमललोचनं व्योमविशोभा वीक्ष्य सरश्चोल्लसति ॥

[ १४ ]

कदलीवनहरिताभां धरणीं वीक्ष्य न नयन तृप्यति,
अहो! कथं नो ग्राम्यजनानां मनो-मयूरो नृत्यति, ?
यवकलायगोधूमचणकक्षेत्राणां छटा विचित्रा,
हृदयविषादं कथमपनयति न सेयं छविः पवित्रा ॥

[ १५ ]

आम्रतिन्तिडीनिम्बकदम्बच्छायां सघनसुनीलां,
संनिषेव्य नहि मनुजः स्मरति नु लोकशोकमयलीला,
उपवनतीरे मृदुलसमीरे, समुपविश्य वनरसिकः,
श्रममनुभवति निमील्य लोचने कथंक इह निरलसकः ॥

[ १६ ]

कलः कोकिलालाप इतो विरहाकुलचातकवाणी,
शुकमेनाकलहोऽत्र च 'बुल्-बुल्' प्रेमकथा कल्याणी,
क्षेत्रविशोधनरततरुणीनां प्रेममयं मधु-गीतं,—
समाकर्ण्य निजमानसदुःखं केन च नो व्यपनीतम् ॥

[ १७ ]

*विकसितविविधकुसुममालेयं लसति विमलजलसरसि,*
लतालिङ्गितास्तरवः परितो रतिं भरन्ति च मनसि,
उत्फुल्लास्ते वीक्ष्य वारिमुकुरे छविमेव न मान्ति,
पुष्पाञ्जलिमुपहारं सरसे दत्त्वा मुदमुपयान्ति ॥

[ १८ ]

सरसे सरसि मनोरथसदृशा लहरी नृत्यति, नश्यति,
फूलकदम्बच्छाया रम्यां प्राप्य कोऽत्र नहि हृष्यति ?
कन्दुककल्पसुगन्धितविलुलितसमुत्फुल्लफललासः,
भ्रमरवरूथो गुञ्जति कृतमकरन्दपानसोल्लासः ॥

[ १९ ]

मञ्जुलवञ्जुलराजी राजति किसलयललिता परितः,
अलिकुलसंकुलनवलवकुलमुकुलाऽऽकुलकलखगदलतः
इतस्ततो वनवर्त्मवाटिका सुरभिमुदञ्चति सततं,
प्रसूनशय्याऽऽस्तीर्णा, नदति च मधुरा वीणा निभृतम् ॥

[ २० ]

गहनकाननं, सन्ध्या वेला, नालानां संयोगः,
भीषणगर्त्तान्यवनि विषमा, विजनवनस्थलयोगः,
वनप्रसूनान्यहो ! क्षिपन्ति च सुरभिं मृदुलसमीरे,
लोकशोकसन्तप्तजनः को नाऽत्र भवेद् गतभी, रे ! ॥

[ २१ ]

सन्ध्यासमये परितो ललिता हर्षनिनादोल्लसिताः,
नानारूपाकारविहङ्गमगणाः यान्ति कुलसहिताः,
किसलयरसमयशाखास्था, गायन्ति मनोहरगानं,
अद्भुतवाद्ययन्त्रमिव तरुरिह भवति प्राप्य खगगानम् ॥

[ २२ ]

निर्ममभावादुड्डीयन्ते यतः कुतस्ते प्रातः,
नश्वरविश्वे मिलनरहस्यं दर्शयन्त उपधातः,
इदं वीक्ष्य सद्भावस्रोतो मनसि कथं न समेयात् ?
को ऽसौ जन इह, योऽत्र न सम्यग् ज्ञानरहस्यमधीयात् ?

[ २३ ]

तिमिरसङ्कुलं प्रकृतिकुलं, निःस्तब्धनिशीथो, मौनं,
निद्रितदिशा, मृदुश्च सदागति, रिन्दुमण्डलं दूनं
प्रशान्तगगने नीरवतारा–'झिल् मिल्' मृदुल हास,
विदधति, के मनुजास्तु लभन्ते ? नाऽत्र सुखदमवकाशम् ॥

[ २४ ]

परितः स्थितस्तुषारसितस्तुङ्गो तु पर्वतः प्रततः,
प्रकृतिमुकुर इव तडाग एषः केन नाम परिरचितः ?,
कूलशिलेयं परममनोज्ञा, विरमेयुश्चेदत्र च,
तर्हि वदेयुः,–कुत्र लभेमह्लादः सुख ह्यन्यत्र च ? ॥

[ २५ ]

वातादाम्रश्रीफलदाडिमलीचीसेवद्राक्षा,
उत्फुल्ला इह; विविधफलानां रुचिराकारःसाक्षा—
दर्शयतीश्वररचनामा वैचित्र्यमयाद्भुतदृश्यं,
सुखं जना इह किं न लभन्ते ? दिव्यदयाप्तमवश्यम् ॥

[ २६ ]

गिरौ, कानने, नगरे, विजने, सर्वत्र च परिमान्त्यः,
सरलतरलतरमृदुलकुटिलगतियुतबहुरूपं यान्त्यः,
कलं किमपि गायन्ति किलास्थिरवेलानिभप्रवाहाः,
कुतः किमित्यायाताः ? क्व च किमु यान्ति ? इमाः सोत्साहाः ?

[ २७ ]

दर्शयन्ति विस्मयमिह मनुजा नहि कथमेता वीक्ष्य, ?
किमपनयन्ति न मानसदुःखं समुदमिमास्तु समीक्ष्य,
यत्र केवलं लतातृणेषु च 'फोगा'[१] एव समृद्धाः,
धूलिपर्वता एव केवलं परितः प्रकृतिनिबद्धाः ॥

[ २८ ]

मनस्तापमपि शमयन्ति च मधुरा 'मतीरा'[२] यत्र,
महातपस्विनमुष्ट्रो गाधेःसुतं स्मारयति यत्र,
नानादृश्यान्यथ मृगतृष्णाया दृश्यन्ते यत्र,
विरलसीकरा नभोभाद्रयोरपि निपतन्ति च यत्र ॥

[ २९ ]

शान्ता दिशा, सुकोमलमार्गः, मृदुलसमीरो रुचिरः,
मयूरनृत्यं शाकटिकस्य च सान्द्रस्वर आः, मधुरः,
एवं विविधविलक्षणताभिः सज्जितदेहा प्रकृतिः,
मोदविमुग्धा जना अतः स्युर्येषां प्रबला नियतिः ॥

---

१—मरुस्थले कमेलकानां प्रियखाद्यभूता गुल्मविशेषाः ।
२—'तरबूज' इति ख्याताः ।

[ ३० ]

पङ्कजरम्भामदनमल्लिकाऽहिफेनपाटलमुकुल-[1]
रक्तककुन्दकलितपिर्किकिंशुक 'नरगिस'[2] मधुकरसुकुल-
निचयो नारी, धर्मसुरभितश्चम्पकशिरीषसुमयोः,
गृहे-गृहे प्रोत्फुल्लवाटिका रम्या यथा नयनयोः ॥

[ ३१ ]

किमिव समनुरज्यन्ति न मनुजास्तद्दर्शनतो लोके,?
प्रकृतेः सुखस्वरूपे सत्यपि कथं निमग्नाः शोके ?
तृणतः-तृणतः स्फुटा व्यज्यते जगन्नियन्तुः सत्ता,
लघोर्लघीयस्यपि च राजते व्याप्ता तस्य महत्ता ॥

[ ३२ ]

तस्य महिम्नो विश्वासो नश्येत् किमु मानवचित्ते,?
ध्वस्तमस्तु कथमेव भवनमिह पूर्वं मौलिकभित्तेः,
तस्य सुमधुरं संगीतं नदति ब्रह्माण्डे भुवने,
तस्यैव ध्वनिरिह च विगुञ्जत्यणुपरमाणौ गगने ॥

[ ३३ ]

सदा ग्रहा सुनियतकक्षायां चंक्राम्यन्ति सुरुचिरं,
स्तोतुमनस एव च त दधत प्रणवगानमधु मधुरं,
प्रकम्पनावेगो, घनगर्जनं, सुघ्न चपलाऽवीडा,
पर्णमर्मरध्वनिः सुललिता प्रसूनकलिकाक्रीडा ॥

[ ३४ ]

प्रशान्तगतिरथ सरितायां अनलस्य तु दहनस्वभावः,
गिरिस्रोतसामविरतनादः, चंचलजल 'कल' रावः,
क्षुब्धवारिधेर्मधुरालापप्रलपनविपुलाऽऽघोषाः,
नाना भाषा मनुजानां, नानोच्चारणपरिघोषाः ॥

१—अत्र 'मुकुल' शब्देन 'अहिफेन' शब्दस्य 'पाटल' शब्दस्य चेत्युभयोरपि सम्बन्धो ज्ञेयः। 'अहिफेनमुकुल'-शब्दस्य च हिन्द्यां 'पोस्त' इत्यर्थः।
२—प्रसिद्धचतिशयवशात् 'नरगिस' शब्दो यथावद्देवोपन्यस्तः।

[ ३५ ]

खगपशुकीटपतङ्गादीनां विभिन्नकालिकभाषाः
तस्य मन्द्रतारस्वरतालोल्लासितलयसङ्काशाः,
वाद्याऽऽस्फालो वज्रपात ऋतवस्तस्यैव प्रगतिः,
निखिलजगज्जीवातोस्तस्य तु महालय. किल विरतिः ॥

[ ३६ ]

सुखसंगीतं शान्तिदायि कियदेव समुज्ज्वलविमलं,
यस्याऽऽकर्णनमात्रमेव जनजीवनलक्ष्यमविचलं,
तदाकर्ण्य भववारिधिपारं यान्ति संयमित-यतयः,
योगिजनाश्च लभन्तेऽमरता तद्विद्योतितमतयः ॥

[ ३७ ]

परं घोरनिद्रामग्ना इव जनाः शेरते देशे,
नह्यामोदविनोदविधेर्भाग गुल्फस्यपि लेशे,
कस्मिश्चन निस्सीमविषादोदधौ निमग्नाः सकलाः,
केनाप्यथवा महाव्याधिना, व्यथिता दीना विकलाः॥

[ ३८ ]

चिन्ताध्वान्तोन्मथितस्वान्ता., कर्त्तव्यान्धा इव ते,
कस्याश्चित् त्वनिवार्यकृते रचनाया व्यस्ता इव ते,
मानसपतनं प्रेक्ष्य तु देशे ह्युदासीनता व्याप्ता,
अन्तर्व्यथां प्रजाया दृष्ट्वा करुणा हृदये प्राप्ता ॥

[ ३९ ]

स तु बाह्यां निजदेशदशामैक्षिष्ट विषादायत्ता,
द्रष्टुमना आन्तरिकं रूपं प्राप्तः समाजसत्तां,
दु.खज्वालोल्लीढजनानथ पथिकः प्रेक्ष्य सुयुक्तः,
विदीर्णहृदय इवासौ जातश्चाश्रुनिरोधेऽशक्त. ॥

[ ४० ]

प्रबलबुभुक्षाज्वाला ज्वलयति गेहे गेहे सततं,
अस्थिपञ्जरे श्वासमात्रमिह रक्तमांसमा. ! क्व गतं ?
अन्नं नास्ति च, वस्त्रं नास्ति च, नास्ति निवासस्थानं,
निजः परो नहि कोऽपि कस्यचन, न च सौहार्दज्ञानम् ।

[ ४१ ]

हन्त ! वराका जनाः कोटिशः दुःखं त्वत्र लभन्ते,
आजीवनमपि जठरज्वाला ज्वलिता ये तु म्रियन्ते,
प्रलपन्तो हा, क्षुधा स्वपन्ति च लब्ध्वा सन्ध्यावेला,
एकवारमपि दिवा न निशि ते शमयन्त्युदरज्वालाम्॥

[ ४२ ]

तोयमात्रमश्नन्ति, तृषां शमयन्ति तथाऽश्रुभिरेव,
विविधव्याधिमयं वय आप्याहानि नयन्ति मुधैव,
जीर्ण-शीर्ण-पटखण्डैरेव च कथमपि संवृतदेहाः,
सोढ्वेयुः कथमहो सूत्रसूचीतोऽप्यपहितगेहाः ॥

[ ४३ ]

परिभ्रम्य वत, सततं प्रातः कालात् सन्ध्यावधि ते,
पारिश्रमिकत्वे तु लभन्ते, वयोह्रास माः, इह ते,
साश्चर्यविचिन्तार्ता विकलाः, कृषकगणाः सङ्कुदतः,
को निष्कासयतीह ग्रासं सहसा तेषां मुखतः ? ॥

[ ४४ ]

घोरयन्त्रणाप्रदः शोषयति शासकवर्गो जनतां,
सर्वस्व ह्यपहरति रक्षकः प्राप्य हन्त, भक्षकतां,
दुर्दमदंष्ट्रदानवोद्वाहे सहायकोऽपि न कश्चन,
नत्यति मृत्युः सदा मस्तके रुदितमृते नतु किञ्चन ॥

[ ४५ ]

"परित'स्त्रायस्वे'त्याक्रन्दनमाकुलदलितजनानां,
जीवनभारं कथं वहेयुः स्वं वा स्वीयजनानां, ?
सद्गुणगणस्तु लुप्तस्तेषां, घोरदीनताहेतोः,
परीवाह आः ! जातस्तेषां दुर्गुणवारिधिसेतोः ॥

[ ४६ ]

कपटवञ्चनामिथ्यादम्भैः परधनमिमे हरन्ति,
कस्यामप्यन्यायकृतौ नहि भीतिं मनसि धरन्ति,
सद्गुणमाला मनुजजीवनोन्नतेः साधिका याऽऽस्ते,
जठरज्वाला तद्धते; हा, महाबाधिकाऽद्याऽऽस्ते ॥

[ ४७ ]

सत्यधैर्यविश्वाससुजनतापौरुषसद्गुणगर्वः,
पणकमूल्यतो हहा ! क्रीयते कुटिलनीतिकृतखर्वः,
नवा नवा अभियोगा नित्यं प्रचलन्ति च हतमूलाः,
हन्यन्ते निर्दोषाः सुजनाः, विदयं गलकृतशूलाः ॥

[ ४८ ]

देशदुर्गतेः कारणमखिलं पथिकोऽबोधि प्रकामं,
"प्रजोन्नतेर्विपरीतो नृपतेः सिद्धान्तोऽस्ति निकामं"
राज्यकार्यसञ्चालनार्थमेवास्ति किञ्चिदपि शिक्षा,
विषमो व्याधिः पतनपिशाचात् कथं भविष्यति रक्षा ॥

[ ४९ ]

प्रजा चरित्रभ्रष्टा भवतु, विनश्येत् मानसशक्तिः,
एतदेव शिक्षाया लक्ष्यञ्चैया शासननीतिः,
चरितविहीना भीरुरशिक्षितजनता स्तान्मदधीना,
असौ निरङ्कुशनृपतेर्भावः, "सहतामनयं दीना" ॥

[ ५० ]

शिक्षाशासनदृशा तु विषमेऽप्यस्मिन् मरुधरदेशे,
कथमपि कतिपयविकचसुमानि तु लसन्ति जलनिश्शेषे,
उन्नतहृदयं तेषां देशप्रेमामृतपरिपूर्णं,
देशजातिहितहेतोर्येषां भयमपि नो मृतितूर्णम् ॥

[ ५१ ]

ते नृपभयनिश्शङ्कहृदो गृह्णन्ति च जनतापक्षं,
दीनहीननृपभीतजनेषु च भरन्त्यभयकृतिलक्ष्यं,
कष्टनिवर्तकविधिं किन्तु ते यत्तु वदन्ति महान्तं,
तदनुरूपमुद्योगं यदि ते जना व्यधास्यन् भान्तम् ॥

[ ५२ ]

सुखं कष्टमपि, तर्हि सुधैव च कालकूटमभविष्यत्,
शतवर्षाग्निमचित्रमत्र तत्कालं धृतमभविष्यत्,
सन्ति सहचराः केऽपि मनोविजनानामेषामित्थं,
येषां कलुषितमनः केवलं स्वार्थवासनासस्थम् ॥

[ ५३ ]

देशभक्तिसमकार्यसाधने स्वर्गीयं छल्युक्ताः,
व्यापारं व्यदधुस्ते स्वीयं धनार्जने ससक्ताः,
नृपतेस्त्रस्ता, मानदानपरिलब्धेराकाशाताः,
प्रजाहितेच्छव इमे सन्ति बत, निर्जाप्तेराशाताः ॥

[ ५४ ]

धन्य ! धन्य ! इति वदन्ति केचन मुधाप्रलापोन्मत्ताः,
सोत्पातं कोलाहलमथ विस्तारयन्ति दुर्वृत्ताः,
हितेच्छवोऽपि भवन्ति कदाचिद् हानिकारकाः समये,
विपत्प्रतीकारे प्रत्यूहाः जायन्ते च तथाऽन्ये ॥

[ ५५ ]

कुशलनाविकं विना प्रबलकल्लोलैर्भ्रान्ता सेयं,
कथमिव यातु समीहिततीरं देशतरणिरुपनेयं,
देशदुर्दशां वीक्ष्य निश्चितां, तत्परचित्तः पथिकः ,
अभूत् समुद्यत आकुलराष्ट्रियसेवायै तद्रसिकः ॥

[ ५६ ]

स्मारं स्मारं दीनान्, व्यसृजत् देहसुखं स स्वीयं,
निजदुःखं दुःखं न, महादुःखं परमाः ! परकीयं,
भूमौ शेते सदा पीनवासश्च मुदा परिधत्ते,
प्रायोऽनाहारोऽपि भवन्नहि कर्मच्युतिमादत्ते ॥

[ ५७ ]

आस तदानीं समस्तदेशे निर्धनतम आः ! एषः,
परन्तु जीवनदृशा तु मूल्येऽभवद्विश्वसविशेषः
कमपि जुगुप्सति नैव, कुत्रचिद् द्विष्यत्यपि वा नैव,
प्रेममूर्तिरानन्दरूप इह वसुधाभूषणमेव ॥

[ ५८ ]

अपि च, लघोरपि लघीयसोऽसौ सुखदसेवको ह्यभवत्,
तन्निकटे गत्वा न जनः को विस्मृतदुःखो ह्यभवत्,?
यमवसरं सामाजिकसेवाकृते तु लभते सोऽयं,
पलमप्यलसवशत्वात्तस्य न गमयति मुधा ततोऽयम् ॥

[ ५९ ]

ग्रामं-ग्रामं गृहे-गृहे स तु जनताव्यथाः सुविततः,
वीक्ष्य, समाकलयच्च सतर्कं शोषणकथा अगणिताः,
कुपितशासनिकतस्त्वैरविरतममितविघ्न उदपादि,
परन्त्वदम्योत्साहोऽवर्धत, तस्याधिकस्तदादि ॥

जिसका केवल धूमिल सा रेखा-चित्र ही मानस-पटल
पर अङ्कित रह गया है,
उस
स्नेहमयी, दिवङ्गता पूज्य माँ की
पुण्य-स्मृति में

[ ६० ]

पथिकस्याचलधैर्यं दृष्ट्वा नृपबलकष्टविसहने,
अत्याचारोत्पीडितताडितजनतामानसगगने,
निविडे तमसि प्रभातवेला यथा शुभाशोल्लासः,
जातो, वीक्ष्य सुपुण्योदयमुदभूदुच्चस्त्वभिलाषः ॥

[ ६१ ]

प्रजाऽर्पयन पथिकाय समस्तं धनं मनश्च शरीरं,
मध्येधारं यथा निमज्जन्तो ह्यलभन्त च तीरम्,
सकलचेतसा केन्द्रमथो, आशाया एकाधारः,
पारम्परिकप्रजाविनयपरिणाम इव च सुखसारः ॥

[ ६२ ]

पथिकः परमाराध्यो जातः सुर इव हृदये-हृदये,
दु:खे बन्धु विपदि वयस्य:, सहयोगी भयसमये,
उपनृपति गतवान् स एकदा राजसभायां वीरः,
प्रत्यपादयत् प्रजादुर्गते हतुमशेषं धीरः ॥

[ ६३ ]

तत्त्वनीतियुतराजधर्मं उपदिष्टो नृपाय तेन,
तत्त्वाकर्ण्य निरङ्कुशनृपतेः कोपो जात,—स्तेन,
ह्यवदत्,शृणु रे पथिक ! नीतिमयतत्त्वं बोऽज्ञासी ,
राजधर्मकथन.य नृपतये मूढ ! कथं त्वायासी. ? ॥

[ ६४ ]

प्रजाजनान् परिवञ्च्य शठ ! त्वं स्वार्थसाधने निरतः,
विश्वेशप्रतिनिधिरूपाद् भूपान्न बिभेषि त्वमत,
मम प्रजा, सानन्दा, शान्ता, कष्टमेकमा ! त्वं रे !
किमुपकरिष्यसि जनतायाः ! शठ ! भिक्षुकरूपस्त्वं रे !

[ ६५ ]

तूष्णीं गच्छ न पश्य दैवहत ! नृपधर्मं नु मदीयं,
नृपाद् विरुध्यतु महदमङ्गलं भविताऽन्यथा त्वदीयं,
प्रजाव्याधिरूपोऽसि सम्यगपि जाने त्वामहमेव,
भारमिव त्वां प्रजामस्तकादपनेष्याम्यहमेव ॥

[ ६६ ]

अहं प्रजायाः भूपः सकलंधामधरा धनमिह मे,
राजकृतौ निजहस्तक्षेपस्यास्त्यधिकारः कस्ते,?
भूपद्वारा 'राज्यसुधारं' प्रेक्ष्याऽसंभवमेव,
जातमुन्नते पथिकमानसे चिन्तनमभिनवमेव ॥

[ ६७ ]

यो निजदेशनिमित्तं समुदं ज्वलने ज्वलितुं शक्तः,
रागरोषनिन्दास्तुतिभिर्यः पथि न विचलितुं शक्तः,
बहुशो नरपतिमसौ तु पुनरपि समवबोधयद् गत्वा,
परं प्रयास. सकलो विफलो ह्यभूदन्ततो गत्वा ॥

[ ६८ ]

नैवानङ्क्षीत् जनताकष्टं, यदा च यत्नो विफलः,
तदा निजेप्सितसिद्धेरन्याश्रयं स लेभे विफलः,
प्रान्ते-प्रान्ते, ग्रामे-ग्रामे, गृहे-गृहे, प्रतिहृदये,
ग्रामं-ग्रामं 'राष्ट्रभावनां' भरतिस्माल्पे समये ॥

[ ६९ ]

सोऽवोचत्–हे प्रियतममामकदेशवासिनः शृणुत !
विस्तृतमौदासीन्यं घोरं कथमिव यूयं वृणुत ?
मनुजाः सन्तोऽप्यहो ! धारयथ पशुसमजीवनभारं,
अनुदिनमर्थविहीना, दीना, भवथ विमुच्याऽऽचारम् ॥

[ ७० ]

बीजं किमिह ? कदापि विचारितमेतत् किन्तु भवद्भिः?
किं तद् बलं ? यतस्त्वनुभूयत उत्पीडा नु भवद्भिः ?
चिन्तत ! किं यूयं निजजीवनदुःखहेतवो न स्थ ?
स्वतन्त्र—शासनसुखविमुखाः किं यूयं सुजना न स्थ ?॥

[ ७१ ]

व्यक्तिविशेषोऽविदयनिरङ्कुशशासक आस्ते भवतां,
भवतएव परिशास्ति नितान्तं शक्ति नीत्वा भवतां,
अत्याचारं स्वयं विदधते, स्वस्मिन् हन्त ! भवन्तः,
हानं-हानं निजहस्ताभ्यामेव रुदन्ति भवन्तः ॥

[ ७२ ]

स्वकसुखसाधनलाभार्थं नहि कोऽप्यधिकारो भवतां,
हे प्रियबन्धो ! मानवतायाः अयं कलङ्को भवतां,
परतन्त्रः सन् निजसुखदुःखे कोऽपि न गदितुं शक्तः,
इदमपमानं जगति केवलं पशुर्विषोढुं शक्तः ॥

[ ७३ ]

शक्तिमन्तरा मतिचातुर्यं भीरुत्व निर्बलता,
पशुता निर्दयता विमूढता मति विना च सबलता,
नुवे मतिर्नहि, बलं केवलं, तदपि चास्ति भवदीयं,
आधयजातं दुःखदुर्गते भवन्त आः ! भवदीयम् ॥

[ ७४ ]

दुःखद-शासनतः स्वामखिलां शक्ति द्रुतमपनयत,
सौख्यदुःखयोः स्वीयं भारं स्वयं समुदमुपनयत,
स्वकं शासनं स्वयं वितत्य च, सुखमिदमेषा शान्तिः,
पारतन्त्र्यतो महती जगति न विषमा काचिदशान्तिः ॥

[ ७५ ]

मुहूर्तमात्रं ह्यपि परवशता नरककोटिदुर्विषहा,
स्वतन्त्रता पलमपि वा शत-शतनाकोत्तमसुखनिवहा,
यदवधि भुवि मानं भवदीयं, 'सबलजीवनं धरत',
यदवधि जीवनमस्ति शरीरे नैव धर्ममपहरत ॥

[ ७६ ]

यावद् धर्मस्तावत् सुखमिह, सुखे कर्म नोत्सृजत,
कर्म-धरायो न्यायवर्त्मनि च भव्यां प्रगतिं भजत,
परिवर्तरन् मनोविचारा यत्र न वदनमुपेत्य,
सबला नो व्यथयेयुर्दीनान्, यत्र दनुजतामेत्य ॥

[ ७७ ]

सर्वेभ्योऽपि निजोन्नतिहेतोः समावसर उत यत्र,
शान्तिमयी राजतु रजनी चानन्दमयाहो यत्र,
स्वाधीने तद्देशे जीवनमये बान्धवाः ! धरत,
रमणीयान्निजचारित्र्याद्भुवि चतुर्वर्गमपि भरत ॥

—इति श्री तृतीयः सर्गः—

# चतुर्थः सर्गः

[ १ ]

मार्गं दर्शं दर्शमनवरतमहं विरहिणी श्रान्ता,
प्रियतम आः ! नायातस्त्वमहं प्रतीक्षमाणा क्लान्ता,
कोऽपि समेत्य प्रियतमवृत्तं मां प्रति चेदवदिष्यत्,
समुड्डीयमानायुपक्षिणे नयनाग्रहोऽभविष्यत् ॥

[ २ ]

विकला हा ! प्रलपामि नु कमहं व्यथाकथां कथयेयं ?
पत्रं क्व प्रहिणोमि ? क्व च सन्देशं ? कुतो नयेयं ?
पान्था अपि हा ! नेतः केचन सम्प्रति कृपयाऽऽयान्ति,
गृहं प्रेक्ष्य दूरान्मम दीनायाः परिवृत्त्या यान्ति ॥

[ ३ ]

अहं जीवनस्यान्तिमघटिकामिह प्रतीक्षे द्वारे,
एकाकाङ्क्षादर्शनहेतोः, तां पूरय संसारे,
एकवार मायाहि, नयनयोर्नाथ ! निमील्य भवन्तं,
हृदयाम्यहमन्यं न कदापि च, नोत्स्रक्ष्यामि भवन्तम् ॥

[ ४ ]

वातायनतो वर्त्मनि नयने विस्तीर्याऽनिशमीक्षे,
प्राणेशं पश्यामि तदपि नहि, नास्मिन्नदिनानि वीक्षे,
स्वप्नेऽवेक्ष्य निजेशं परमं सुखमहमाप्य नितान्तं,
मिलितोत्सुका भवामि तदा हा, धावति निद्रा प्राक् तम् ॥

[ ५ ]

हन्त ! तदा दुर्विषहा दहति वियोग-वेदना हृदयं,
सुप्त्वा गमयति लोकोऽहं जागृत्वा गमयाम्यदयं,
मामुपयासि नु नयनमीलने, तदुन्मीलने निरयसि,
खेल-खेल भ्रामकखेलं, कान्त ! कथं मां व्ययसि ?॥

[ ६ ]

यदा सूचयति सारङ्गः, पवनश्च कपाटौ नुदति,
तत्क्षणमथ धावामि, मनस्त्वामागतमिव यद् वदति,
विफला परमवरुध्य मानसं हन्त, पुनः प्रत्येमि,
मुहु-र्मुहुर्नवतन्दिनमेनां प्रतारणामहमेमि ॥

[ ७ ]

यतः प्रभृति हृदयेश ! मानसे भवतः संस्मृति रुदिता,
ततः प्रभृति मत्स्मृतिरा ! त्यक्त्वा मां जाने नो क्व गता, ?
सुखसहचर्य्यः सख्यो मां विरहार्त्तां हित्वा याताः,
स्वार्थिजगत्येकाकिन्यहमाः ! विपदाक्रान्ता जाता ॥

[ ८ ]

क्षुधातृषे ह्यपि मामजहातां, वीक्ष्य वियोगापन्नां,
नानुभवामि कदापि च निद्रामह दृशोरासन्नां,
काक ! समीहितमद्य साध्यतां तनुमेनामुत्खाद्य,
दयितदर्शनप्रतिनयनं परमुत्सृज मे, कृपयाऽद्य ॥

[ ९ ]

गगन-नीलिमानं प्रक्षाल्य नु वल्लिवरस्यान्तरतः,
समुदितविधोः, पथिकलोचनाकर्षकस्य दर्शनतः,
आनिशमपि शशिबिम्बे निश्चलदृशं सुशान्ता ददती,
मुदमेष्यामि प्रियतमदृष्टिस्पर्शाह्लादं दधती ॥

[ १० ]

अभविष्यं तृष्याऽहं, तस्या प्रियो न्यधास्यच्चरणं,
प्रभो! व्यधास्यो धूलिं मां त्वं, यत्रैति प्रियचरणं,
अभविष्यत् प्राणाह्लादः स नु, सैव मानसानन्दः,
मम जीवनसार्थकतोद्दलितश्चात्मामोदोऽमन्दः ॥

[ ११ ]

मत्सरविषमदुरात्महृदयवज्ज्येष्ठोऽयं प्रोत्तपति,
दुर्गमदिशा वलय माः! धूल्या साकं ज्वालाः क्षिपति,
पवनः प्राणान् हरति, जल स्थलमखिलमभूद्दुस्तप्तं,
क्वचन घनच्छाये मम पथिको गमयति दिनमभितप्तम् ॥

[ १२ ]

'रिम-झिम' वर्षति सघनसुनीला जलदघटा सोल्लासं,
एकाकी क्लिश्यति मम पथिकः, क्व स? विवशा च क्वाऽहं?
'एहि गृहं पथिकोऽपि मिलिष्यति', मुनेरेनमादेशं,
मत्वाऽत्राहं स्वयं वन्दिनी गृहेऽभवं निश्शेषम् ॥

[ १३ ]

उन्मत्तेव सदैव विरहिणी सैवं प्रलपन्त्यासीत्,
रोदिति, हसति, कदाप्युच्छ्वास विवशा मुञ्चन्त्यासीत्,
नाममात्र माः! तनुः, त्वचावृतमस्थिपञ्जरं त्वासीत्,
विरहरुजोन्मथिता च नितान्तं शक्तिविहीना साऽऽसीत् ॥

[ १४ ]

सिन्धुतटे प्रियदर्शनतः पश्चादथ बहुवत्सरतः,
आशायामेवास विरहिणी, पलमपि गता न गृहतः,
प्रियतमनाम वदितुमेवास्याः, प्रतिश्वासनिस्सरणं,
साऽजीवत् केवलमन्ते प्रियदर्शनमाप्तुं शरणम् ॥

[ १५ ]

युगपदेकदा तत्र दैवमिव कतिचन जनाः समेताः,
श्रान्ताः, क्लान्तास्तृषिताः कञ्चन कूपतटं समुपेताः,
ग्राम्यान् कानप्युपस्थितांस्ते मनोविषादं स्वीयं,
अवदन् न्यायरहितशासनमथमुन्मदनृपनीतीयम् ॥

[ १६ ]

अस्माकं सौभाग्यं हृतसर्वस्वं, सद्व्रतधारी,
अत्र भीषणेऽन्यायसङ्कटे प्रजैकरक्षणकारी,
प्राणेभ्योऽपि प्रियोऽथ पूज्यः पितेव सकले देशे,
नेता नः पथिको वन्दी जातोऽद्य नृपाज्ञोद्देशे ॥

[ १७ ]

अन्यायी नृपतिस्तु तदर्थं वधादेशमपि कृतवान्,
हन्त ! निरीहविवशजनतायां वज्राघातं कृतवान्,
अस्मद्धितचिन्तनहेतोः सत् पथिकः प्रियोऽस्मदीयः,
अनाश्रयान् परिहाय श्वो नः प्रेष्यति धाम महीयः ॥

[ १८ ]

नियतिवञ्चिता वयं तु यामस्तदन्त्यदर्शनहेतोः,
चलत, धावत यूयमपि स्वं; दृशा देशहितगन्तोः,
बाष्परुद्धकण्ठाः प्ररुदन्तस्तेऽप्यथ दुःखोन्मथिताः,
गताः, कथामाकर्ण्याऽक्रन्दन् निखिलमानवा वनिताः ॥

[ १९ ]

शनैः शनैः शुश्राव यदोदन्तं ग्रामीणा जनता,—
तदैव सकला पथिकमिलितसोद्वेगाऽभूद्विधिविहता,
ग्राम्यां प्रकृतिं विहाय बालकतरुणवृद्धनरमहिलाः,
महाविपदमुद्वोढुमक्षमाः क्षिप्रमधावन् विकलाः ॥

[ २० ]

पथिकप्रिया यदाऽम्नोदेतद्वृत्तं विषादविरसं,
रोम-रोम सोल्लासं जातं, मनोऽपारसुखसरसं,
तृषितो यथा जलाय, च लहरी तटाय विकला यद्वत्,
राजपुरीं प्रति पथि सोत्कण्ठाऽचलद् विरहिणी तद्वत्।।

[ २१ ]

सुतं नयन्तो मम नृप-प्रासाद हृषुपाजगाम,
परितो वत्मनि यत्र सैन्यदल एत्य महान् विरराम,
प्रजा निर्भयं स्वच्छन्दं विचरन्ती सन्ततमासीत्,
यातायातनिषेधादेशः पथि न क्वापि तदाऽऽसीत्।।२१।।

[ २२ ]

ऐपोन्नृपतिः प्रजा प्रचुरसंख्यायामत्रोपेयात्,
वीक्ष्य राजविद्रोहदमनमयदृश्यं भीरुर्भूयात्,
यतो भविष्यति मूर्धानं निजमुच्चैः कोऽपि न कुर्यात्,
मम दृढ़ आतङ्को जनतायां सम्यग व्याप्तो भूयात्।।

[ २३ ]

तदा वाहिनी विज्ञप्ताऽऽसीद्, भूपेनाऽत्र कठोरं,
"प्रजाऽऽचरेदुत्पातं चेत्—नि.शेषां हत रे घोरं",
लौहशृङ्खलानिगडितपथिकः कारागाराभिमुख,
उपाविशत्, तं परितोऽगणितप्रजौघ आः! सुखविमुख.।।

[ २४ ]

सस्मितवदनः शान्ताकारो गौरवमयलोचनतः,
मर्तुमुद्यतः पथिकोऽभून्निश्चितनिर्भयमानसतः,
गरलभरितपात्रं परिनिहितं तस्य पुरस्तादासीत्,
मृत्युर्मूर्ध्नि स्थित. परं नो म्लानमनोमुख आसीत्।।

[ २५ ]

बालकयुववृद्धा नरनार्यो विकला अरुदन् सततं,
करुणदृश्यमवलोक्याऽधीराः अभवन्, दुःखं विततं,
इयत्येव संमर्दं भित्वा वायुवेगतश्चैत्य,
पथिक-प्रिया द्रुतं विषपात्रं पपौ युगपदुत्थाप्य ॥

[ २६ ]

हाहाकारं चकार जनता कोलाहलश्च जातः,
अनिमेषं निःस्तब्धजनं दृष्टश्चकितैरभिपातः ॥
मूर्ध्नि निधाय पथिकपदरेणुं पथिकप्रिया विनीता,
श्रद्धाभक्तिप्रेमपूर्णनयनाभ्यां प्रेक्ष्य प्रीता ॥

[ २७ ]

'वदति',-प्राणधन ! प्राणेश्वर हे जीवनज्योतिः ! स्वामिन् !
कृत-कृत्या जाताऽद्य नितान्तं मम हृदयान्तर्यामिन् !
सौभाग्याद् भव्यादसरोऽयं समुपेतः, सहसाऽद्य,
इदमनन्तसुखमहो ! स्मरन्तीं, मृत्युरेतु मा सद्यः ॥

[ २८ ]

सेवां काऽमपि नाऽकार्षं भवतोऽहमतीव विगर्ह्या,
प्रकृतिभक्त ! गेहोत्सर्गिन् ! मे त्रुटिर्न हृदये धार्या,
वक्तुमशक्नोदेतदेव—गरलप्रभावतो न्यपतन्,
पथिकमुखं पश्यन्ती सुभगा समुदं त्रिदिवमगच्छत् ॥

[ २९ ]

शान्तः पथिको दृढहृदयादनिमेषं पश्यन्नासीत्,
अन्तिममुदमाकर्ण्य नयनयोर्जलबिन्दुद्वयमासीत्,
'दिव्यदर्शनं कुरुत मातु' रिति सहसा तस्मिन् समये,
श्रुतं, सर्वशः कोलाहलोऽथ जातो दर्शकनिचये ॥

[ ३० ]

पथिकक्रियात्मोत्सर्गं ददृशुर्जना भवितसाधाराः,
प्रावहदेयां नयनाभ्यामविरामा दृग्जलधारा,
पटाञ्चलैः स्वैर्ललना प्रौञ्छन् मुहुर्मुहुर्निजनयने,
नयनजलार्द्रा अहो ! अञ्चला अपि तु रुदन्तीवेमे ॥

[ ३१ ]

पथिकसूनुरपि तत्रैवासीत्, मातुः पृष्ठादेत्य,
पितुरनभिज्ञो मृदुलप्रकृतिः संमर्दाद् भयमेत्य,
अवदत्—मातः ! स्वपिषि किमु त्वं ? चलोत्तिष्ठ, गृहमेव,
क्षुधा बाधते मां ! एकाकी कुत्र यामि ? कुत एव ॥

[ ३२ ]

अम्ब ! भोजयसि मा त्वं किमपि न ! पयः पाययसि नो च,
दिवानिशं रोदिषि च खेलयसि कदापि मां त्व नो च,
मुग्धवाचमाकर्ण्य समेषां कण्ठो व्यथया रुद्धः,
पर्यवहद् हृदयेषु दयाजलधिर्विपदूर्म्यनुबद्धः ॥

[ ३३ ]

साश्चर्यं ददृशुर्लोका वाणी न मुखान्निस्सरति,
रुदनावेगो मुहुर्मुहुः समुदेति, कण्ठमुद्भरति,
पर्यूढं हृदयं प्रतिरोद्धुमशक्ता काचिज्जननी,
निर्दयनृपं तूर्णं मत्वाऽग्रे ययौ, नीरमपनयनी ॥

[ ३४ ]

शिशुस्नेहसान्द्रा च विह्वला बालं द्रुतमुदनैषीत्,
तन्मुखमस्तकमियं मुहुश्चुम्बित्वा क्रोडमनैषीत्,
विस्मयमयीमपूर्वामेकां प्रेमतर्पिणीं घटनां,
अनिमेषं साश्चर्यं स्तब्धा जना ददृशुरतिरचनाम् ॥

[ ३५ ]

हन्त ! तदैवोद्धत उद्दण्डश्चोत्सुक उग्रः कश्चित्,
द्रुतमभद्रतानिष्ठुरताभ्यां वर्त्म विभिन्दन् युगपत्,
नृपदूतो राजाज्ञां नीत्वाऽऽयातः क्रौर्ययुतः,
वज्राघातमिवादेश सोद्घोषमभाषोन्मत्तः ॥

[ ३६ ]

राज्ञि तथैव च राजशासने घृणाप्रकटनाकर्ता,
राजभक्तसन्तुष्टप्रजायामुग्रभावनाभर्ता,
विद्रोहाय समुद्यतकारी जगदीश-प्रतिनिधितः,
अपराधी पथिकोऽयमनर्हः क्षन्तुं समस्तविधितः ॥

[ ३७ ]

तदपि प्रजेति बुद्ध्वा राज्ञा त्वियमुदारता विहिता,
अपराधेभ्यो न्यूनतमा मृतिदण्डभोगिता विहिता,
दयामूर्तिनृपतेस्तु दया तत्रापि विचारे नयत,
तदादेश आसीद् यद् वीराः ! क्रौर्यात् पथिकं न हत ॥

[ ३८ ]

विषदानात् पामरपथिकस्यास्य जीवनं हरत !
खलतायाः परिणामं दृष्ट्वा यूयं स्वयं सुधरत !
भार्याऽप्यस्य शठेऽस्मिन् महतीं घृणां विदधती चासीत्,
पापकृत्यमेतस्य वीक्ष्य बत, सदा रुदन्ती सासीत् ॥

[ ३९ ]

भर्तुः प्रेक्ष्य कुनीतिं सा किं सुखमाप्नोद् जीवित्वा,
सोढुमशक्ता विगर्हणां मृतिमाप्नोद् गरलं पीत्वा,
नृपतिः खिन्नो 'मारणकारण' मयमेव तु परमघमः,
भूपोरसि हेतोरस्मादुदपद्यत कोपो विषमः ॥

[ ४० ]

समादिशद् नृप, उत्कृत्यास्याङ्गानि शरीरं छित्वा,
घातोद्घातैः खलं मारयत, मुहुर्मुहुर्व्यथयित्वा,
क्षमामथ च याचेत यदि स्वीकृत्य स निजमपराधं,
जीवनदान न्यायदृशा कुरुतास्य तर्हि निर्बाधम् ॥

[ ४१ ]

नाङ्गीकुर्यान्निजापराध दुराग्रहान्वेदेषः,
तर्हि कालकरवालग्रासः सुतोऽस्य भवतादेषः,
निर्वाप्याग्नि, तृणे स्फुलिङ्ग निधाय रक्षणमस्य तु,
निहत्य फणिनं पय:पानतः सर्पकरक्षा कस्य तु ? ॥—

[ ४२ ]

मौर्ख्यं नाऽस्ति, रिपुं निहत्य तद्वंशपोषणं चैव, ?
परमबुद्धिमत्तेहाऽशान्ते द्वैतमुन्मूलनमेव,
दूतः पथिक कुपिताभ्या नयनाभ्यामैक्षिष्टैवं,
दुरादेशमाकर्ण्य भीषणं जनताऽक्रन्दच्चैवम् ॥

[ ४३ ]

कोपशोकतः पृथग् दृढो निर्भयपथिको मतिधीरः,
तम्यगभीरगिरा गगनं हृचुत्पावयंश्च कृतिवीरः,
ऊचे, राजभजयोरहित मया कदापि न होष्टं,
व्यधा निखिलजनकल्याणार्थं स्वं कर्त्तव्यमभीष्टम् ॥

[ ४४ ]

आत्मा साक्षी, सापराधमिह सोयं मा नो वदति,
क्षमायाचनाया हेतुस्तत् कोऽपि नाम नो भवति,
आकर्ण्यैतत् खलो राजदूतः कोपात्प्रज्वलति,
कटकटाम्य रदनान्, लोहितनेत्राभ्या ज्वालां क्षिपति ॥

[ ४५ ]

पार्श्वस्थान् पथिकान् न्यगदत् सः–प्रलपतु पामर एषः,
प्रजासौख्यशान्त्योर्हेतोर्नहि कार्य्यो विलम्बलेशः,
छिन्त ! मस्तक पथिकतनूजस्येकः श्रुत्वाऽधावत्,
बालहस्तमुत्कृष्य नृशंसो भुव्यपातयद् युगपत् ॥

[ ४६ ]

'हाहाकार' मकुर्वन् लोकाः, परं क्षणेन स वधिकः,
शिशुं करालात् करवालान्निजघान पापनिरवधिकः,
मृदुहृदया देव्यो न्यपतन् करुणार्द्रा मूर्च्छायताः,
क्रौर्यकर्म निरवेक्ष्य जना उदकम्पन्ताऽऽकुलचित्ताः ॥

[ ४७ ]

मिथो मुखानीक्षितुमारब्धाः स्तब्धा अचलदृशा ते,
कर्त्तव्यज्ञानान्धा जाता शुचा स्वमर्मभिदा ते,
वीरयुवकमघायाऽन्यायो जातोऽसौ अविसह्यः,
प्रजज्वाल चोत्क्रान्तिज्वालाऽभूच्च विप्लवोऽनह्यः ॥

[ ४८ ]

'मारयतैतानाततायिन'स्त्वित्यवदन् सोद्घोषं,
तरुणैस्तत्क्षणमथोद्गृहीता वधिका द्रुता जोषं,
हृदये-हृदये प्रतिहिंसाया भीषणभावो भरितः,
दिशो व्यकम्पन्त द्रुतमेव च कोलाहल उद्भरितः ॥

[ ४९ ]

नृशंसनिर्दयदुःखदनृपतेर्मूलोच्छेदं कुरुत,
अस्मान्यायिन आशु धरण्यां पाप-भारमपहरत,
विषमक्रोधान्धान् पुनः सावेशानथ परिदृश्य, च
लौहशृंखलाबद्धपथिक उत्थाय हस्तमुद्धृत्य, च ॥

[ ५० ]

गदति, बान्धवाः ! शृणुत, परं संभालयत स्वां शक्ति,
मा कार्ष्टाऽन्यायादपराधं लब्ध्वा कोपाऽऽसक्ति,
नृपादेशपालनतः खलु दूता बधिका निर्दोषाः,
एषां विषये भवत न सुजनाः ! यूय समिद्धरोषाः ।।

[ ५१ ]

आज्ञापालनमेवैषां किल धार्मिकरक्षणमस्ति,
गुणानदृष्ट्वा दुर्गुणदर्शनमशुभं लक्षणमस्ति,
सकुशलमक्षतमितो द्रुतं भद्राः ! निस्सारयतैतान्,
वृथा कोपदग्धान्न विधत्थ च चरान् वराकानेतान् ।।

[ ५२ ]

कुरुत सखायः ! नैव मदर्थं कस्यचिदप्यपकारं,
सुख-सकटयोः स्वयं हेतुरहमस्मि कृतेरनुसार,
ममापराधी समारेऽस्मिन् कश्चन मनुजो नास्ति,
किञ्चिदपि प्रतिहिंसाभावो मदीयहृदये नास्ति। ।

[ ५३ ]

ममाद्य आसीत् सुतो मदीयः, सदुपयोजितः सोऽद्य तु,
मत्सत्यस्य प्रमाणमभवत्, सफलजीवनः सोऽद्य तु,
मदीयदेहत्यागान्नश्येत्, मनोभय यदि राज्ञः,
तर्हि सदुपयोगोऽयं भविताऽऽस्माकं जीवनस्याऽऽद्यः ।।

[ ५४ ]

अद्यावधि कर्त्तव्यकर्म्मणां स्वेषामासं दासः,
कस्मिन् जनं वदत को जातो मम चाभारोद्भासः,?
मत्कृतकर्म स्वहितनिमित्तं नो यूयं स्वीकुरुत,
इत्थं मत्कर्माणि बान्धवाः ! निर्मूल्यानि न कुरुत ।।

[ ५५ ]

अनिवार्यं सत्कर्त्तव्यं प्रतिदेशनिवासिन एतत्,
समर्पयेद् राष्ट्रियसेवायां यदपि बलं सकलं तत्,
प्रतिक्रियायां किन्तु प्रजया मानं सुविधां नेच्छेत्,
स्वार्थभावमुत्सृज्य मनो निजधर्मपालने यच्छेत् ॥

[ ५६ ]

निजामूल्यमणिमालामिह यः कपर्दिकार्थं दत्ते,
उन्मत्तोऽसौ मूढः किं भो मतिभ्रष्टता धत्ते ?
[1]शोणितसरितोद्वाहनमिह पशुता, मानसदुर्बलता,
चारित्र्यादरिवशीकरणमथ शोभामयी सफलता ॥

[ ५७ ]

दुर्भाग्यात् कस्मिन्नपि हृदये प्रदोदेति सक्रोधः,
पशुबलमेधत, आत्मबलं क्षीयते सहैवोद्बोधः,
दयान्यायसुविचारीयोऽध्वा क्रोधात्सद्यो भ्रश्यति,
रोषपिशाचोन्मथितजनस्य स्वत्वं सद्यो नश्यति ॥

[ ५८ ]

प्रबलरिपुः कोपो भवदीये हृदय-गृहे प्रतिवसति,
जगज्जेतुमर्हत तं जित्वा, ततः शक्तिरुल्लसति,
अनयकोपकातर्यकपटदुस्साहसनिकरं निहत,
करुणोद्वलितनिजात्मशक्तितोऽजेयसमर्था भवत ॥

[ ५९ ]

परपीडनवैमुख्यमस्तु, परहितसाधनतत्परता,
निर्भयहृदाऽस्तु परनिन्दायां मूकत्वं च बधिरता,
न चाऽऽत्मानमवमन्यध्वं रे ! सत्ये वर्त्मनि चलत,
श्रेय इद यत्—न्यायमार्गात् पदमपि नैव विचलत ॥

१—शोणित-सरित्प्रवाहनमिह…

[ ६० ]

मत्सदेशमिमं देशे सर्वान् संश्रावयतैव,
मदनुरोधमिममेकं स्मरणानापि च्यावयतैव,—
"अद्यान्त्यं समीक्ष्य दृश्यं जाता या व्याकुलता,—
तत्प्रतिरोधं नैव निनीषतु मत्प्रियराष्ट्रियजनता" ॥

[ ६१ ]

पूर्वपरिचितो मुनिः प्रगल्भः पथिकाग्रतः समेत्य, च,
प्रेमजलार्द्रलोचनो गद्गद्गिराऽऽगदद् हृद्युपसृत्य, च,
धन्यं तव सुपवित्रचरित्रं, पुत्र ! जीवनं धन्यं,
धन्यः प्रेमपणः सत्यव्रतमात्मिकबलञ्च धन्यम् ॥

[ ६२ ]

जन्म गृहीत्वा त्वया पवित्रं कृतं जगद् हे पुत्र !
त्वयोज्जीविता जातिरसीत साक्षात्कृत्वा पुत्र !
ग्रामं-ग्राम देशेऽद्राक्षं—'त्वमेव हृदये-हृदये,—'
श्वाससमानो विराजसे, भव्याऽऽशा यथैव विनये ॥

[ ६३ ]

तावकपावननामग्रहणात् दुःखोदधि तरिष्यति,
भवत्पवित्रचरित्रस्मरणाद् देश अरं सुधरिष्यति ॥
सफलमनोरथ एषोऽद्याहं, पूर्णा चाऽऽकाङ्क्षा मे,
जराजीर्णजीवनमयदेहस्य न चावश्यकता मे ॥

[ ६४ ]

सीकरजलधिमिलितवेलेयं सुचिरयाचिताऽऽयाता,
अन्तिममानसधन स्मरन्नहमेमि पूर्णता जाता,
पथिकनेत्रकमले नु विकसिते मुनिदिनकरदर्शनतः,
करपुटबद्धं नत्वा वक्ति स, उत्सुकमनोनयनतः ॥

[ ६५ ]

परं प्रहृष्याम्यहं प्रपूर्णा ममान्तिमा हृदयेच्छा,—
तव दर्शनहेतोस्तु ममाभूद्, मुनिवर ! महती वाञ्छा,
पूज्यपाद ! गुरुदेव ! तवास्या दिव्यदयाया बलतः,
संवृत्तोऽहं सुखी, जीवनं लब्ध्वा ह्यभिमतफलतः ॥

[ ६६ ]

विकसितकुसुममवोचस्त्वं यत्—कस्मै रे ! विकलस्त्वं,
अन्तःपश्य ! प्रच्छन्नस्त्वाभीप्टफलात् सबलं त्वम्,
भवतैवेश्वरसाक्षात्कारक शुद्धमन्त्र उपदिष्टः,
देव ! भवत्कृपयैव मया विशदः सुखमार्गो दृष्टः ॥

[ ६७ ]

भवानमोघा शक्तिरुर्वराऽहं लघुतमतृणमेव, च,
नैव भविष्याम्यह कदापि मुने ! भवतो ऽनृण एव, च,
यमन्वेषमन्वेषं श्रान्ताः, अगणिततापसवर्य्याः,
ध्याने द्रष्टुमसफला जाताः, यं यतिविरागिवर्य्याः ॥

[ ६८ ]

यत्राज्ञानविमूढा, भीतोद्भीता जनाः स्वकरतः,
निर्वापं दीपानां व्यदधुस्तिमिराऽऽकुलताभयतः,
यत्र विविधविपदाभिर्विकला जनाः संकुला आसन्,
यत्र बुभुक्षोन्मथिता दीना निःसंज्ञं च न्यपतन् ॥

[ ६९ ]

यत्र रुजाक्रान्ता विकलाङ्गा भिक्षुकदुःखिदरिद्राः,
असहाया उपविष्टा आसन्, विधिभक्षितसुखनिद्राः,
दीनकर्षकाः पर्यश्राम्यन् क्षेत्रेष्वनिशं यत्र, च
श्रमलीनाः श्रमिकाश्चण्डातप आः ! निःश्वसन्ति यत्र च ॥

[ ७० ]

तमन्विष्यतस्तत्रैवाहं भक्तान् नित्यमपश्यं,
रूपं वीक्ष्य दीनबन्धोरहमहो परं प्राहृष्य,
तत्परिमार्गणनिरता भक्ताः किन्तु तदासन् विपिने,
सरितस्तीरे, मेरोः शिखरे, ललितवल्लरीभवने ॥

[ ७१ ]

विमलमणिसुमालानां किं वा यशोवर्णने तस्य च,
रागाम्बुधिमन्थनेऽथ कोलाहले वाद्यनिकरस्य च,
विरागवादे वेदान्तस्य च विलुलितविलासभवने,
मनोविनोदविशदविषये वा कौतुककुलसङ्कुलने ॥

[ ७२ ]

यदोभयोरन्वेषण एवं सुदूरमन्तरमत्र,—
कथं प्रसीदेत् सुखिसु तदाऽसौ दीनबन्धुर्हरिरत्र,
जगदीशः किं दीनजनार्ति हर्तुं नो शक्नोति च, ?
शक्नोत्येव स, सुखदु खात्मकमखिलजगद् व्याप्नोति च ॥

[ ७३ ]

मेरुशृङ्गमपि वारिनिमग्नं क्षणे स कर्तुं शक्तः,
ध्वंसशेषमथ राजभवनमपि दृशैव कर्तुं शक्तः,
समस्तशक्तेः केन्द्रं, चाखिलजगन्नियन्ता सैव,
प्रेमप्राण:, कृपापयोधिः, लोकपालकः सैव ॥

[ ७४ ]

अपाचकार स दीनजनानां किं न यातनासरणिं, ?
उदद्योतयद्योग्यजनाग्रे सैकं स्ववसर–तरणिं,
स्थले-स्थले करुणाया दृश्यं जन-जननयनसमक्षं,
अ ˙ ˙ ो यत्राऽन्यति न जगद्धितेच्छुकदु.खम् ॥

[ ७५ ]

प्रभुप्रेरणां मत्वा यो मनुजस्तत्रैति सजोषं,
सौभाग्यात् सामोदं पिबति स विभुदर्शनपीयूषं,
एनमगमयत् स्वावसरमपि यो मानवजीवनधारी,
स न्यमज्जयन्मानवताया अधिकारं ह्यघकारी ॥

[ ७६ ]

इदं रहस्यमबोधि मुनेऽहं भवतामनुकम्पातः,
भवदुपकारं नैवेमं विस्मरिष्यामि सुखयातः,
इत्थं श्रद्धाप्रेमजलप्राह्लादनिमग्ननयनतः,
सार्धं द्रष्टुमलगत् स पथिको भक्तिविमुग्धहृदयतः ॥

[ ७७ ]

चित्रितवत्, निःस्तब्धाश्चकिता ददृशुर्जना विचित्रं,—
समाधिस्थसाधुः स्वर्गं द्रुतमेत्य व्यधात् पवित्रं,
साऽऽक्रोशं तत्क्षणमेव तु जनता व्याकुलिताऽधावीत्,
एको वधिकः सहैव सैनिकयूथं नीत्वाऽयासीत् ॥

[ ७८ ]

क्रोधादथ पथिकानुरोधतो ज्ञानविशून्या जनता,
तत्र स्थातुं न चाऽशक्नुवन्, असह्यपीडाऽऽकुलिताः,
हाहाकारं कुर्वन्तो विलपन्तः स्खलन्त एव,
जग्मुस्ततोऽसुवातकपीडास्थानात् पतन्त एव ॥

[ ७९ ]

शून्या दिशः स्थितः पुरतोऽस्ति च कालकरालो वधिकः,
साश्चर्यं सैनिकास्तु ददृशुः, 'परमोल्लसितः पथिकः',
नृपोऽवदद्, हत्यामाकर्ण्य तु-'विपदो विगता निखिलाः,
हृद्यमभूद्यदहन्यन्ताद्य तु—पथिकसाधुमुतमहिलाः ॥

—इति श्रीचतुर्थः सर्गः—